॥ श्रीकृष्णाय नमः ॥

# ॥ श्रीमदग्निकुमारप्रोक्तं श्रीसर्वोत्तमस्तोत्रम् ॥




श्रीवल्लभश्रीरघुनाथविरचितविवृतिद्वयसमेतं

"भोगीलाल झवेरदास गोलवाला" इत्यस्य द्रव्यसाहाय्येन

नटपुरस्थपीताम्बरदासतनयत्रिभुवनदासेन प्रकाटितम्॥

---

श्रीवल्लभाब्दाः ४४१. प्रथमावृत्तिः १०००

मूल्यं षट् कलाः ।

---

Printed at the "Gujarat" P. Press, Richey Road,
Ahmedabad by Somalal M. Shah

# श्रीमदग्निकुमारप्रकटितं
# श्रीसर्वोत्तमस्तोत्रं

## श्रीगोकुलेशकृतविवृतिसहितम् ॥

नत्वा पितृपदाम्भोजमैहिकामुष्मिकार्थदम् ।
तत्प्रोक्ताचार्यनामानि विवरिष्ये यथामति ॥१॥
यद्यप्ययोग्य एवाहं तन्नामविवृतौ स्वत. ।
स्वीयत्वेनैव कृपया योग्यतां मयि दास्यति ॥२॥
इतिविश्वासतो नूनं प्रवृत्तोऽहं न चान्यथा ।
अतस्त एव शरणं मम सर्वार्थसिद्धये ॥३॥

श्रीमत्पितृचरणा. श्रीमदाचार्याणामलौकिकनामानि प्रकटयितुमा-चार्याणां स्वरूपं तत्प्राकट्यहेतुं च वक्तुमाचार्यैकप्रकटितभक्तिमार्ग-प्रतिपाद्यं सर्वश्रुतिश्रीभागवतगीताद्यनेकालौकिकप्रमाणसिद्धं पूर्वोक्त-प्रमेयमूलभूतं साक्षात्पुरुषोत्तमस्वरूपं सर्वमूलत्वेन मङ्गलार्थं स्तुवन्ति प्राकृतधर्मानाश्रयमिति ॥

प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति ।
निगमप्रतिपाद्यं यत्तच्छुद्धं साकृति स्तौमि ॥१॥

प्राकृताः प्रकृतिजन्या ये सत्त्वादयो धर्मास्तेषामनाश्रयं तद्धर्मसम्बन्धमात्ररहितमित्यर्थः, ननु प्राकृतधर्मानाश्रयत्वोक्त्या तदितरधर्मप्रसिद्धेः स्वरूपस्य निर्धर्मकत्वमायातीतिशङ्काव्युदासार्थमाहुः अप्राकृतनिखिलध [illegible]
[illegible]कां आनन्दमया
रूपमित्यर्थः, अत्र देहेन्द्रियादीनामपि तद्रूपत्वोक्त्या तेषामपि स्वरूपवदानन्दरूपत्वमेव न तु लौकिकशरीरवदात्मानात्मकृतभेदोऽप्यस्तीत्यर्थः, इति निगमप्रतिपाद्यमिति, इतिशब्दोऽत्र प्रकारवाची तेनानेन प्रकारेण पूर्वोक्तेन यच्छ्रुतिप्रतिपाद्यं पुरुषोत्तमस्वरूपं, शुद्धं आनन्दमात्रकरपादमुखोदरादिरूपं, तदपि साकृति आकारसहितं न तु मायावादादिभ्रान्तशास्त्रप्रतिपादितब्रह्मवन्निराकारं, स्तौमि स्तुतिविषयं करोमीत्यर्थः ॥ १ ॥

ननु पूर्वोक्तैतावद्धर्मवत्त्वेन भगवत्त्वेन भगवत्स्वरूपं भवद्भिर्ज्ञायते कथमन्यैः शास्त्रविद्भिरपि पण्डितैर्न प्रतिपादितं कुत्रापीतिचेत् तत्र हेतुमाहुः कलिकालेति ॥

कलिकालतमश्छन्नदृष्टित्वाद्विदुषामपि ।

सम्प्रत्यविषयस्तस्य माहात्म्यं समभूद् भुवि ॥२॥

कलिकालजनितं यत्तमः अज्ञानं तेन छन्नाः समन्तादावृता **दृष्टयो** येषां तेषां भावस्तत्त्वं तस्मात् , **विदुषामपि** अधीतवेदशास्त्राणामपि **सम्प्रति** कलिकाले **तस्य** श्रुतिप्रतिपाद्यसाक्षात्पूर्णपुरुषोत्तमस्य **माहात्म्यं अविषयः** ज्ञानागोचरः **समभूत्** , यतस्ते **भुवि** भूलोके स्थिताः, तेन तदतिरिक्तभगवल्लोकस्थितानां तन्माहात्म्यं ज्ञानागोचर[1] मेवेत्यर्थः, **समभूत्** सम्यक् श्रुत्युक्तप्रकारेण ज्ञानगोचरो नाभूदित्यर्थः॥२॥

ननु भवतामपि भुव्येव प्राकट्यात् तन्माहात्म्यं कथं ज्ञानगोचर[2] इत्याशङ्कानिरासाय स्वज्ञानगोचरप्रकारमाहुः **दययेति** ॥

दयया निजमाहात्म्यं करिष्यन् प्रकटं हरिः ।
वाण्या यदा तदा स्वास्यं प्रादुर्भूतं चकार हि[3] ॥३॥

**दयया** स्वकीयनिरुपधिदुःखप्रहाणेच्छया. **निजं** स्वकीयं **माहात्म्यं** पुष्टिमार्गीयलीलारम्भभावात्मकं पूर्वोक्तप्रकारेण सर्वज्ञानाविषयं तादृशं, **वाण्या** स्ववचनद्वारा, स्वकीयेषु **प्रकटं करिष्यन्** . **स्वास्यं** स्वस्य पुरुषोत्तमस्यैवानन्दमात्राधिदैविकाग्निरूपं **यदास्यं** मुखं तत् ,

१. ज्ञानागोचरमित्यपि पाठः ।
२. ज्ञानगोचरमित्यपि पाठः ।
३ हिस्थाने हः क्वचन ।

प्रादुर्भूतं चकार प्रकटीकृतवान्, अत्रास्यं प्रादुर्भूतं चकारेत्येता-वतैव चारितार्थत्वेपि यत् स्वपदमुक्तं तेनांशकलावतारवत् कमपि धर्मं स्थापयित्वाचार्याणामपि यत्किञ्चिद्वक्तृत्वादिधर्मस्थापनेनाम्यरूपत्वं भविष्यतीत्याशङ्कानिरासायोक्तं स्वास्यं प्रादुर्भूतं चकारेति, यथा-स्थितस्यैव वस्तुनो दर्शनं प्रादुर्भावः न त्वविद्यमानस्य जनित-स्यापि दर्शनं प्रादुर्भावः, तेनाचार्याणामपि यथास्थितसाक्षात्पुरुषोत्तम-श्रीमुखत्वेनैव प्रादुर्भावः, न तु कमप्यंशं तत्रत्यं त्याजयित्वा, एतज्ज्ञा-पनार्थमुक्तं स्वास्यं प्रादुर्भूतं चकारेति. ननु भगवतः स्वतः सर्वार्थ-पूर्णस्य किमेतावत्करणे प्रयोजनमितिचेत् तत्राहुः हरिरिति, यतः स्वकीयानां सर्वदुःखहर्ता, यदि स्वास्यं न प्रकटयेत् तदा सर्वेषां स्व-कीयानां हेतन्मार्गीयमाहात्म्याज्ञानात्तज्जनितं दुःखं तिष्ठेदेवेति स्वस्य हरित्वमेव न स्यादतः स्वस्य हरित्वसिद्ध्यर्थमेवैतावत् कृतवानिति-ज्ञापनार्थमेवोक्तं हरिरिति, हि युक्तश्चायमर्थः, यदि हरित्वेन सा-स्यप्राकट्यं न कुर्यात् तदा साक्षाद्भक्तिमार्गीयमाहात्म्यप्राकट्याभावात् स्वीयानां सर्वपुरुषार्थसिद्धिर्न स्यादित्यत उक्तं हीति, हेतिपाठे स्वकीयानामर्थे एतावदलौकिककरणं कृपयेति प्रभोरत्यन्तभक्त-परवशत्वज्ञापनायोक्तं हेति, एतेन स्वस्य फलमार्गीयमाहात्म्यज्ञाने सा-स्यप्राकट्यमसाधारणो हेतुरुक्त इति स्वस्य ज्ञानमितरेषामज्ञानं च सिद्धमिति न काप्यनुपपत्तिः ॥ ३ ॥

एवं भगवत्परत्वेन श्लोकार्थ उक्तः, आचार्यपरत्वेपि श्लोकार्थ उच्यते ॥

**प्राकृतधर्मानाश्रयमि**त्यादि, श्रीमत्पितृचरणाः श्रीमदाचार्याणामलौकिकनामानि प्रकटयितुमाचार्यस्वरूपं तत्प्राकट्यहेतुं च वक्तुं स्वीयातिरिक्तानामाचार्यस्वरूपज्ञानाभावहेतुं स्वीयानामाचार्यस्वरूपज्ञानहेतुं च वक्तुमाचार्यस्वरूपं वर्णयन्ति **प्राकृते**ति पूर्ववत् , **निगमप्रतिपाद्य**मिति, यद्यप्याचार्योद्देशेनाचार्यस्वरूपं निगमे प्रतिपाद्यत्वेन न श्रूयते तथाप्याचार्याणां साक्षात्पुरुषोत्तममुखारविन्दाधिष्ठातृत्वेन साक्षात्पुरुषोत्तमाखिलधर्मवत्त्वात् पुरुषोत्तमस्य साकारानन्दमयत्वेन प्रतिपाद्यत्वादाचार्याणामपि तदात्मत्वेन श्रुतिप्रतिपाद्यत्वमेवेतिज्ञापनायोक्तं **निगमप्रतिपाद्यं यत्तच्छुद्धं साकृतीति**, एवमाचार्याणामपि श्रुतिप्रतिपाद्यत्वं निरूप्य तत्स्तुतिं प्रतिजानते **स्तौमीति**, स्तुतिविषयं करोमीत्यर्थः ॥१॥ ननु भवन्निरूपितैतावद्धर्मवत्त्वेनाचार्यस्वरूपं कथमन्यैः शास्त्रविद्भिरपि पण्डितैर्न प्रतिपादितं कुत्रापीतिचेत्तत्राहुः **कलिकाले**ति पूर्ववत् , **तस्य** आचार्यस्य ॥२॥ अत परं स्वस्याचार्यस्वरूपज्ञाने हेतुमाहुः **दययेति** पूर्ववत् ,अत्र पितृचरणानां सिद्धवत्कारेणाचार्याणां पुरुषोत्तमास्यत्वकथनस्यायमाशय , भगवदाज्ञया श्रीभागवतगूढार्थविवरणारम्भ आचार्यैरेव स्वातिरिक्तस्य श्रीभागवतगूढार्थज्ञाने "अर्थं तस्य विवेचितु"मितिश्लोके स्वस्य ज्ञाने वाक्पतित्वेन वैश्वानरत्वोक्त्या साक्षा-

प्रादुर्भूतं चकार प्रकटीकृतवान्, अत्रास्यं प्रादुर्भूतं चकारेत्येता-
वतैव चारितार्थत्वेपि यत् स्वपदमुक्तं तेनांशकलाद्यवतारवत् कमपि धर्मं
स्थापयित्वाचार्याणामपि यत्किञ्चिद्भक्तृत्वादिधर्मस्थापनेनास्यत्वं
भविष्यतीत्याशङ्कानिरासायोक्तं स्वास्यं प्रादुर्भूतं चकारेति, यथा-
स्थितस्यैव वस्तुनो दर्शनं प्रादुर्भावः न त्वविद्यमानस्य जनित-
स्यापि दर्शनं प्रादुर्भाव . तेनाचार्याणामपि यथास्थितसाक्षात्पुरुषोत्तम-
श्रीमुखत्वेनैव प्रादुर्भाव., न तु कमप्यंशं तत्रत्यं त्याजयित्वा, एतज्ज्ञा-
पनार्थमुक्तं स्वास्यं प्रादुर्भूतं चकारेति. ननु भगवतः स्वतः सर्वार्थ-
पूर्णस्य किमेतावत्करणे प्रयोजनमितिचेत् तत्राहु- हरिरिति, यत-
स्वकीयाना सर्वदु ग्वहर्ता, यदि स्वास्य न प्रकटयेत् तदा सर्वेषां स्व-
कीयानां ह्येतन्मार्गीयमाहात्म्याज्ञानात्तज्जनितं दुःखं तिष्ठेदेवेति स्वस्य
हरित्वमेव न स्यादतः स्वस्य हरित्वसिद्ध्यर्थमेवैतावत् कृतवानिति-
ज्ञापनार्थमेवोक्तं हरिरिति, हि युक्तश्चायमर्थः, यदि हरित्वेन स्वा-
स्यप्राकट्यं न कुर्यात् तदा साक्षाद्भक्तिमार्गीयमाहात्म्यप्राकट्याभावात्
स्वीयाना सर्वपुरुषार्थसिद्धिर्न स्यादित्यत उक्तं हीति, हेतिपाठे
स्वकीयानामर्थे एतावदलौकिककरणं कृपयेति प्रभोरत्यन्तभक्त-
. परवशत्वज्ञापनायोक्तं हेति, एतेन स्वस्य फलमार्गीयमाहात्म्यज्ञाने स्वा-
स्यप्राकट्यमसाधारणो हेतुरुक्त इति स्वस्य ज्ञानमितरेषामज्ञानं च
सिद्धमिति न काप्यनुपपत्तिः ॥ ३ ॥

एवं भगवत्परत्वेन श्लोकार्थ उक्तः, आचार्यपरत्वेपि श्लोकार्थ उच्यते ॥

**प्राकृतधर्मानाश्रयमित्यादि**, श्रीमत्पितृचरणाः श्रीमदाचार्याणामलौकिकनामानि प्रकटयितुमाचार्यस्वरूपं तत्प्राकट्यहेतुं च वक्तुं स्वीयातिरिक्तानामाचार्यस्वरूपज्ञानाभावहेतुं स्वीयानामाचार्यस्वरूपज्ञानहेतुं न वक्तुमाचार्यस्वरूपं वर्णयन्ति **प्राकृतेति** पूर्ववत्. **निगमप्रतिपाद्यमिति**, यद्यप्याचार्योद्देशेनाचार्यस्वरूपं निगमे प्रतिपाद्यत्वेन न श्रूयते तथाप्याचार्याणां साक्षात्पुरुषोत्तममुखारविन्दाधिष्ठातृत्वेन साक्षात्पुरुषोत्तमाखिलधर्मवत्त्वात् पुरुषोत्तमस्य साकारानन्दमयत्वेन प्रतिपाद्यत्वादाचार्याणामपि तदात्म्यत्वेन श्रुतिप्रतिपाद्यत्वमेवेतिज्ञापनायोक्तं **निगमप्रतिपाद्यं यत्तच्छुद्धं साकृतीति**, एवमाचार्याणामपि श्रुतिप्रतिपाद्यत्वं निरूप्य तत्स्तुतिं प्रतिजानते **स्तौमीति**, स्तुतिविषयं करोमीत्यर्थः ॥१॥ ननु भवन्निरूपितैतावद्धर्मवत्त्वेनाचार्यस्वरूपं कथमन्यैः शास्त्रविद्भिरपि पण्डितैर्न प्रतिपादितं कुत्रापीतिचेत्तत्राहुः **कलिकालेति** पूर्ववत्, **तस्य** आचार्यस्य ॥२॥ अत परं स्वस्याचार्यस्वरूपज्ञाने हेतुमाहुः **दययेति** पूर्ववत्, अत्र पितृचरणानां सिद्धवत्कारेणाचार्याणां पुरुषोत्तमास्यत्वकथनस्यायमाशय ; भगवदाज्ञया श्रीभागवतगूढार्थविवरणारम्भ आचार्यैरेव स्वातिरिक्तस्य श्रीभागवतगूढार्थज्ञाने "अर्थ तस्य विवेचितु"मितिश्लोके स्वस्य ज्ञाने वाक्पतित्वेन वैश्वानरत्वोक्त्या साक्षा-

प्रादुर्भूतं चकार प्रकटीकृतवान्, अत्रास्यं प्रादुर्भूतं चकारेत्येता-वतैव चारितार्थत्वेपि यत् स्वपदमुक्तं तेनांगकलायवत्तारवत् कमपि धर्मं स्थापयित्वाचार्याणामपि यत्किंचिद्वक्तृत्वादिधर्मस्थापनेनाप्यरूपत्वं भविष्यतीत्याशङ्कानिरासायोक्तं स्वास्यं प्रादुर्भूतं चकारेति, यथा-स्थितस्यैव वस्तुनो दर्शनं प्रादुर्भाव. न त्वविद्यमानस्य जनित-स्यापि दर्शनं प्रादुर्भाव. तेनाचार्याणामपि यथास्थितसाक्षात्पुरुषोत्तम-श्रीमुखत्वेनैव प्रादुर्भावः, न तु कमप्यंशं तत्रत्यं त्याजयित्वा, एतज्ज्ञा-पनार्थमुक्तं स्वास्यं प्रादुर्भूतं चकारेति. ननु भगवतः स्वतः सर्वार्थ-पूर्णस्य किमेतावत्करणे प्रयोजनमितिचेत् तत्राहुः हरिरिति, यत-स्वकीयाना सर्वदुःखहर्ता. यदि स्वास्यं न प्रकटयेत् तदा सर्वेषां स्व-कीयाना होतन्मार्गीयमाहात्म्याज्ञानात्तज्जनितं दुःखं तिष्ठेदेवेति स्वस्य हरित्वमेव न स्यादतः स्वस्य हरित्वसिद्ध्यर्थमेवैतावत् कृतवानिति-ज्ञापनार्थमेवोक्तं हरिरिति, हि युक्तश्चायमर्थः, यदि हरित्वेन स्वा-स्यप्राकट्यं न कुर्यात् तदा साक्षाद्भक्तिमार्गीयमाहात्म्यप्राकट्याभावात् स्वीयानां सर्वपुरुषार्थसिद्धिर्न स्यादित्यत उक्तं हीति, हेतिपाठे स्वकीयानामर्थे एतावदलौकिककरणं कृपयेति प्रभोरत्यन्तसंक . परवशत्वज्ञापनायोक्तं हेति, एतेन स्वस्य फलमार्गीयमाहात्म्यज्ञाने स्वा-स्यप्राकट्यमसाधारणो हेतुरुक्त इति स्वस्य ज्ञानमितरेषामज्ञानं च सिद्धमिति न काप्यनुपपत्तिः ॥ ३ ॥

एवं भगवत्परत्वेन श्लोकार्थ उक्तः, आचार्यपरत्वेपि श्लोकार्थ उच्यते ॥

**प्राकृतधर्मानाश्रय**मित्यादि, श्रीमत्पितृचरणाः श्रीमदाचार्याणामलौकिकनामानि प्रकटयितुमाचार्यस्वरूपं तत्प्राकट्यहेतुं च वक्तुं स्वीयातिरिक्तानामाचार्यस्वरूपज्ञानाभावहेतुं स्वीयानामाचार्यस्वरूपज्ञानहेतुं च वक्तुमाचार्यस्वरूपं वर्णयन्ति **प्राकृते**ति पूर्ववत्, **निगमप्रतिपाद्य**मिति, यद्यप्याचार्योद्देशेनाचार्यस्वरूपं निगमे प्रतिपाद्यत्वेन न श्रूयते तथाप्याचार्याणां साक्षात्पुरुषोत्तममुखारविन्दाधिष्ठातृत्वेन साक्षात्पुरुषोत्तमाखिलधर्मवत्त्वात् पुरुषोत्तमस्य साकारानन्दमयत्वेन प्रतिपाद्यत्वादाचार्याणामपि तदास्यत्वेन श्रुतिप्रतिपाद्यत्वमेवेतिज्ञापनायोक्तं **निगमप्रतिपाद्यं यत्तच्छुद्धं साकृती**ति, एवमाचार्याणामपि श्रुतिप्रतिपाद्यत्वं निरूप्य तत्स्तुतिं प्रतिजानते **स्तौमी**ति, स्तुतिविषयं करोमीत्यर्थः ॥१॥ ननु भवन्निरूपितैतावद्धर्मवत्त्वेनाचार्यस्वरूपं कथमन्यैः शास्त्रविद्भिरपि पण्डितैर्न प्रतिपादितं कुत्रापीतिचेत्तत्राहुः **कलिकाले**ति पूर्ववत्, **तस्य** आचार्यस्य ॥२॥ अत परं स्वस्याचार्यस्वरूपज्ञाने हेतुमाहुः **दयये**ति पूर्ववत्, अत्र पितृचरणानां सिद्धवत्कारेणाचार्याणां पुरुषोत्तमास्यत्वकथनस्यायमाशयः, भगवदाज्ञया श्रीभागवतगूढार्थविवरणारम्भ आचार्यैरेव स्वातिरिक्तस्य श्रीभागवतगूढार्थज्ञाने "अर्थं तस्य विविचितु"मितिश्लोके स्वस्य ज्ञाने वाक्पतित्वेन वैश्वानरत्वोक्त्या साक्षा-

प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति ।
निगमप्रतिपाद्यं यत्तच्छुद्धं साकृति स्तौमि ॥१॥

प्राकृताः प्रकृतिजन्या ये सत्त्वादयो धर्मास्तेषामनाश्रयं तद्धर्मसम्बन्धमात्ररहितमित्यर्थः, ननु प्राकृतधर्मानाश्रयत्वोक्त्या तदितरधर्मप्रसिद्धेः स्वरूपस्य निर्धर्मकत्वमायातीतिशङ्काव्युदासार्थमाहुः अप्राकृतनिखिलधर्मरूपमिति, अप्राकृताः प्रकृतिसम्बन्धरहिता अलौकिका आनन्दमया ये निखिलाः सर्वे धर्मा देहेन्द्रियप्रभृतयः तत्स्वरूपमित्यर्थः, अत्र देहेन्द्रियादीनामपि तद्रूपत्वोक्त्या तेषामपि स्वरूपवदानन्दरूपत्वमेव न तु लौकिकशरीरवदात्मानात्मकृतभेदोप्यस्तीत्यर्थः, इति निगमप्रतिपाद्यमिति, इतिशब्दोत्र प्रकारवाची तेनानेन प्रकारेण पूर्वोक्तेन यच्छ्रुतिप्रतिपाद्यं पुरुषोत्तमस्वरूपं, शुद्धं आनन्दमात्रकरपादमुखोदरादिरूपं, तदपि साकृति आकारसहितं न तु मायावादादिभ्रान्तशास्त्रप्रतिपादितब्रह्मवन्निराकारं, स्तौमि स्तुतिविषयं करोमीत्यर्थः ॥ १ ॥

ननु पूर्वोक्तैतावद्धर्मवत्त्वेन भगवत्त्वेन भगवत्स्वरूपं भवतैव ज्ञायते कथमन्यैः शास्त्रविद्भिरपि पण्डितैर्न प्रतिपादितं कुत्रापीतिचेत् तत्र हेतुमाहुः कलिकालेति ॥

कलिकालतमश्छन्नदृष्टित्वाद्विदुषामपि ।

सम्प्रत्यविषयस्तस्य माहात्म्यं समभूद् भुवि ॥२॥

कलिकालजनित यत्तमः अज्ञान तेन छन्नाः समन्तादावृता दृष्टयो येषा तेषा भावस्तत्त्व तस्मात्, विदुषामपि अधीतवेदशास्त्राणामपि सम्प्रति कलिकाले तस्य श्रुतिप्रतिपाद्यसाक्षात्पूर्णपुरुषोत्तमस्य माहात्म्यं अविषयः ज्ञानागोचर समभूत्, यतस्ते भुवि भूलोके स्थिता, तेन तदतिरिक्तभगवल्लोकस्थिताना तन्माहात्म्य ज्ञानागोचर[1] एवेत्यर्थ, समभूत् सम्यक् श्रुत्युक्तप्रकारेण ज्ञानगोचरो नाभूदित्यर्थ ॥२॥

ननु भवतामपि भुव्येव प्राकट्यात् तन्माहात्म्य कथ ज्ञानगोचर[2] इत्याशङ्कानिरासाय स्वज्ञानगोचरप्रकारमाह दययेति ॥

दयया निजमाहात्म्यं करिष्यन् प्रकटं हरिः ।
वाण्या यदा तदा स्वास्यं प्रादुर्भूतं चकार हि[3] ॥३॥

दयया स्वकीयनिरुपधिदु खप्रहाणेच्छया निज स्वकीय माहात्म्य पुष्टिमार्गीयलीलारसभावात्मक पूर्वोक्तप्रकारेण सर्वज्ञानाविषय तादृशं, वाण्या स्ववचनद्वारा, स्वकीयेषु प्रकटं करिष्यन् स्वास्यं स्वस्य पुरुषोत्तमस्यैवानन्दमात्राधिदैविकाग्निरूप यदास्यं मुख तत्,

१ ज्ञानागोचरमित्यपि पाठ ।
२. ज्ञानगोचरमित्यपि पाठ ।
३ हिस्थाने ह वचन ।

प्रादुर्भूतं चकार प्रकटीकृतवान्, अत्रास्यं प्रादुर्भूतं चकारेत्येतावतैव चारितार्थत्वेपि यत् स्वपदमुक्तं तेनांशकलाद्यवतारवत् कमपि धर्मं स्थापयित्वाचार्याणामपि यत्किञ्चिद्वक्तृत्वादिधर्मस्थापनेनाप्यरूपत्वं भाविष्यतीत्यागङ्कानिरासायोक्तं स्वास्यं प्रादुर्भूतं चकारेति, यथास्थितस्यैव वस्तुनो दर्शनं प्रादुर्भावः न त्वविद्यमानस्य जनितस्यापि दर्शनं प्रादुर्भावः, तेनाचार्याणामपि यथास्थितसाक्षात्पुरुषोत्तमश्रीमुखत्वेनैव प्रादुर्भावः, न तु कमप्यंशं तत्रस्थं त्याजयित्वा, एतज्ज्ञापनार्थमुक्तं स्वास्यं प्रादुर्भूतं चकारेति. ननु भगवतः स्वतः सर्वार्थपूर्णस्य किमेतावत्करणे प्रयोजनमितिचेत् तत्राहुः हरिरिति, यतः स्वकीयानां सर्वदुःखहर्ता, यदि स्वास्यं न प्रकटयेत् तदा सर्वेषां स्वकीयानां ह्येतन्मार्गीयमाहात्म्याज्ञानाजन्नितं दुःखं तिष्ठेदेवेति स्वस्य हरित्वमेव न स्यादतः स्वस्य हरित्वसिद्ध्यर्थमेवैतावत् कृतवानितिज्ञापनार्थमेवोक्तं हरिरिति, हि युक्तश्चायमर्थः, यदि हरित्वेन स्वास्यप्राकट्यं न कुर्यात् तदा साक्षाद्भक्तिमार्गीयमाहात्म्यप्राकट्याभावात् स्वीयानां सर्वपुरुषार्थसिद्धिर्न स्यादित्यत उक्तं हीति, हेतिपाठे स्वकीयानामर्थे एतावदलौकिककरणं कृपयेति प्रभोरत्यन्तभक्तपरवशत्वज्ञापनायोक्तं हेति, एतेन स्वस्य फलमार्गीयमाहात्म्यज्ञाने स्वास्यप्राकट्यमसाधारणो हेतुरुक्त इति स्वस्य ज्ञानमितरेषामज्ञानं च सिद्धमिति न काप्यनुपपत्तिः ॥ ३ ॥

एवं भगवत्परत्वेन श्लोकार्थ उक्तः, आचार्यपरत्वेपि श्लोकार्थ उच्यते ॥

**प्राकृतधर्मानाश्रयमित्यादि**, श्रीमत्पितृचरणाः श्रीमदाचार्याणामलौकिकनामानि प्रकटयितुमाचार्यस्वरूपं तत्प्राकट्यहेतुं च वक्तुं स्वीयातिरिक्तानामाचार्यस्वरूपज्ञानाभावहेतुं स्वीयानामाचार्यस्वरूपज्ञानहेतुं च वक्तुमाचार्यस्वरूपं वर्णयन्ति **प्राकृतेति** पूर्ववत् . **निगमप्रतिपाद्यमिति**, यद्यप्याचार्योद्देशेनाचार्यस्वरूपं निगमे प्रतिपाद्यत्वेन न श्रूयते तथाप्याचार्याणां साक्षात्पुरुषोत्तममुखारविन्दाधिष्ठातृत्वेन साक्षात्पुरुषोत्तमाखिलधर्मवत्त्वात् पुरुषोत्तमस्य साकारानन्दमयत्वेन प्रतिपाद्यत्वादाचार्याणामपि तदात्म्यत्वेन श्रुतिप्रतिपाद्यत्वमेवेतिज्ञापनायोक्तं **निगमप्रतिपाद्यं यत्तच्छुद्धं साकृतीति**, एवमाचार्याणामपि श्रुतिप्रतिपाद्यत्वं निरूप्य तत्स्तुतिं प्रतिजानते **स्तौमीति**, स्तुतिविषयं करोमीत्यर्थः ॥१॥ ननु भवन्निरूपितैतावद्धर्मवत्त्वेनाचार्यस्वरूपं कथमन्यैः शास्त्रविद्भिरपि पण्डितैर्न प्रतिपादितं कुत्रापीतिचेत्तत्राहुः **कलिकालेति** पूर्ववत् . तस्य आचार्यस्य ॥२॥ अतःपरं स्वस्याचार्यस्वरूपज्ञाने हेतुमाहुः **दययेति** पूर्ववत् ,अत्र पितृचरणानां सिद्धवत्कारेणाचार्याणां पुरुषोत्तमात्म्यत्वकथनस्यायमाशयः, भगवदाज्ञया श्रीभागवतगूढार्थविवरणारम्भ आचार्यैरेव स्वातिरिक्तस्य श्रीभागवतगूढार्थज्ञाने "अर्थं तस्य विवेचितु"मितिश्लोके स्वस्य ज्ञाने वाक्पतित्वेन वैश्वानरत्वोक्त्या साक्षा-

त्पुरुषोत्तममुखारविन्दाधिष्ठातृत्वं निरूपितं, तत्र हेतुः श्रीभागवतस्य द्वादशाङ्गत्वेन पुरुषोत्तमरूपत्वात् पुरुषोत्तमस्वरूपं पुरुषोत्तमस्यैव गम्यं नान्यस्येत्यत एव गीतास्वप्यर्जुनेनोक्तं "न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे"ति, तस्मादाचार्याणां पुरुषोत्तमस्वरूपनिरूपकत्वात् निरूपणस्य वाग्रूपत्वात् वाग्रूपत्वेपि वाच आस्य एव सत्त्वादाचार्याणामास्यरूपत्वमेवेतिज्ञापनायोक्तं स्वास्यं प्रादुर्भूतं चकार हीति ॥३॥ अतःपरं स्वास्यरूपेणाविर्भूय प्रकटितसुबोधिन्यादिस्वसिद्धान्तग्रन्थानां गूढार्थत्वेन स्वीयानामपि सम्यक् तदर्थविबोधनाभावादकृतार्थतैव भवेदिति यथा स्वीयानां तदुक्तार्थावबोधेन कृतार्थता भवेत्तदर्थं तदुक्तार्थावबोधप्रकारज्ञापनाय माहात्म्यज्ञापनाय चासाधारणं साधनमाहुः तदुक्तमपीति॥

ननु भवद्भिः स्वस्य साक्षाद्भक्तिमार्गीयमाहात्म्यज्ञाने भगवदास्यप्राकट्यहेतुरुक्तस्तेन भवतां तन्माहात्म्यज्ञानसम्पत्तिः सर्वापि सिद्धैवेति पुनस्तन्नामाष्टोत्तरशतप्राकट्ये को हेतुरिति तत्प्राकट्यप्रयोजनमाहुः तदुक्तमपीति ॥

तदुक्तमपि दुर्बोधं सुबोधं स्याद्यथा तथा ।
तन्नामाष्टोत्तरशतं प्रवक्ष्याम्यखिलाघहृत् ॥ ४ ॥

यद्यप्यस्माकं तदर्थप्रकटितमुखारविन्दरूपाचार्यानुग्रहवशात् तदुक्तसुबोधिन्यादिपूर्णार्थावबोधोजनि तथाप्याधुनिकानां तदीयानां

जीवत्वेनाल्पबुद्धिमत्त्वात् सुबोधिन्यादीनां तात्पर्यानवगमादकृतार्थतैव सम्पद्येतेति यथा तेषामपि तत्तात्पर्यावबोधो भवेत् तदर्थमुपायान्तराभावात्तथा तेषामेवाचार्याणामेवाष्टोत्तरशतसङ्ख्याकानि **नामानि प्रवक्ष्यामि** प्रकर्षेण कथयामीत्यर्थः, यद्यपि **तन्नामाष्टोत्तरशतं वक्ष्यामी**त्येतावतैव चारितार्थ्येऽपि यत् प्रशब्दोपादानं तदेतन्नाम्नां नित्यत्वेन पूर्वसिद्धानामेवाष्टोत्तरशतनाम्नां प्राकट्यकरणं प्रशब्देन द्योत्यते. यत एतन्नामाष्टोत्तरशतं पूर्वोक्तधर्मविशिष्टमत एव तदुक्तार्थावबोधप्रतिबन्धनाशकमित्याहु **अखिलाघहृदिति**, यद्यपि लोके अघशब्दस्य पापवाचकत्वं प्रसिद्धं तदाचार्यप्रकटितभक्तिमार्गानुवर्तिनां तत्सम्भावनापि दूरतरेत्यत्राघशब्देन सुबोधिन्याद्यर्थावबोधप्रतिबन्धस्यैवाघरूपत्वात्तन्नाशकत्वमेतन्नाम्नामष्टोत्तरशतस्यैवेतिज्ञापनार्थमुक्तम**खिलाघहृदिति** ॥४॥

एवमाचार्यस्वरूपस्य तन्नाम्नां चानन्दमयत्वादलौकिकत्वमुपपाद्य सर्वत्र नामप्राकट्ये छन्दऋषिदेवतानियमस्यावश्यकत्वादाचार्यनाम्नामानन्दमयत्वेनालौकिकत्वात्तद्द्रष्टा ऋषिरप्यलौकिक एवापेक्षित इति ऋषिस्वरूपं निरूपयन्ति **ऋषिरग्निकुमारस्त्वि**ति ॥

**ऋषिरग्निकुमारस्तु नाम्नां छन्दो जगत्यसौ ।**
**श्रीकृष्णोऽस्य देवता च बीजं कारुणिकः प्रभुः॥५॥**

१ श्रीकृष्णोस्य देवता चेतिपाठस्तु दुष्ट एव ।

ननु सहस्रनामादितद्द्रष्टॄणामपि ऋषित्वादेतदष्टोत्तरशतनामद्रष्टुरपि तत्तुल्यत्वमस्त्वित्याशङ्कानिरासायात्र तुशब्दः, तेनैतन्नामद्रष्टुर्ऋष्यन्तरापेक्षयालौकिकत्वं ज्ञाप्यते, अन्येषामृषीणामृषिगणनायां प्रसिद्धत्वात् तद्दृष्टमन्त्रसहस्रनामादीनामपि वेदपुराणप्रसिद्धत्वेनापूर्वद्रष्टृत्वाभावान्नालौकिकमृषित्वं. प्रकृते त्वाचार्याष्टोत्तरशतनाम्नां वेदपुराणेष्वप्रसिद्धत्वेन सर्वाज्ञातत्वात् तज्ज्ञाता ऋषिरन्येभ्यः सर्वेभ्यो विशिष्यत इत्येतद्द्वयेराग्निकुमारत्वमुक्तं, अत्रायमाशयः, यथा एतदन्यर्षीणां वेदपुराणोक्तमन्त्रनामद्रष्टृत्वात् शुद्धमर्यादामार्गीयत्वं तथात्राप्यृषित्वेप्यग्निकुमारत्वकथनाच्छुद्धपुष्टिमार्गीयत्वमुक्तं, तेन यथा व्रतवरदानप्रस्तावनिरूपणे सर्ववेदपुराणाप्रसिद्धत्वेन सर्वाज्ञातो मन्त्रः "कात्यायनि महामाये महायोगिन्यधीश्वरि नन्दगोपसुतं देवि पतिं मे कुरु ते नमः" इति तत्प्रतिपाद्यदेवतासहितस्तेरेव दृष्टो नान्यैस्तथैवैतान्याचार्यनामानि वेदपुराणाप्रसिद्धत्वेनान्याज्ञातान्येभिरेव प्रकटीकृतानीत्येतन्नामप्रकटन एतेषामेवर्षित्वमिति ज्ञापनायाग्निकुमारत्वोक्तिः, यथाग्निकुमारकप्रकटितमन्त्रकृतपूजायाः क्रमेणावान्तरफलपरमफलप्राप्तिरभूत्तथैवैतत्प्रकटितनामपाठात् क्रमेणतन्मार्गोक्तावान्तरफलपरमफलप्राप्तिः सम्पत्स्यत इति ज्ञापितं भवति, अथवा स्वस्मिन्नग्निकुमारत्वसूचितमर्थं गोपायितुमाचार्याणामग्नित्वप्रसिद्ध्या स्वस्य तदात्मजत्वेनाग्निकुमारत्वमुक्तमित्यर्थः, ऋषिं निरूप्यातःपरं

छन्दोनिरूपणमाहुः **नाम्नां छन्द** इति, नाम्नां सहस्रनामाष्टोत्तरशतनाम्नां जगति यत् प्रसिद्धं छन्दस्तदत्रापि **सर्वोत्तमस्तोत्रे छन्द** इत्यर्थः, छन्दो निरूप्यातःपरं देवतानिरूपणमाहुः **असौ श्रीकृष्णास्यं देवता** चेति, अत्र **श्रीकृष्ण**पदोक्त्या भक्तसाहित्यकथनेन तल्लीलारसाविष्टत्वमुक्तं, तदास्यकथनेनैतन्मार्गीयालौकिकाधिदैविकानन्दमयाग्निस्वरूपत्वमुक्तं,तस्य **देवता**त्वकथनेनैतत्स्तोत्राधिष्ठातृत्वमेतत्स्तोत्रोक्तफलदातृत्वं च ज्ञापितं, केवलं फलदातृत्वमेव न किन्तु स्वस्याप्येतत्फलभोक्तृत्वमप्यस्तीत्येतदुभयसमुच्चयार्थं चकार, ननु ब्रह्मादिदुर्लभस्य मर्यादामार्गीयश्रुत्यगम्यस्य फलस्य स्वकीयेष्वेव दाने किं बीजमित्याकाङ्क्षायामाहुः **बीजं कारुणिक** इति, स्वीयेषु निरपस्यसाधारणकरुणावत्त्वज्ञापनार्थमुक्तं **कारुणिक** इति, यदीतरभगवन्मार्गाचार्यवत् स्वीयानामपि मुक्तिमेव दद्यात् तदा स्वप्रकटितपुष्टिमार्गफलानधिकारित्वेन शुद्धपुष्टिमार्गीयत्वं न स्यात्, अत. स्वीयान् सर्वत पृथक्कृत्य स्वप्रकटितशुद्धपुष्टिमार्गीयफलदानेन सर्वोत्कर्षसिद्धौ करुणावत्त्वमेव बीजमितिज्ञापनायोक्तं **कारुणिक** इति, ननु पूर्वोक्तकरुणावत्त्वेऽप्येतत्फलस्य सर्ववेद्यत्वेन भगवताप्यत्यन्तरङ्गभक्तेष्वेव प्रकटितस्य दाने कथं सामर्थ्यमितिचेत्तत्राहुः **प्रभुरिति**, प्रभुत्वेनात्यसाधारणसामर्थ्यात्तादृशफलस्यापि दाने सामर्थ्यज्ञापनार्थमुक्तं **प्रभुरिति** ॥ ५ ॥

एवं बीजत्वमुपपाद्यैतत्स्तोत्रपाठस्य कुत्र विनियोग इत्याकाङ्क्षायामाहुः विनियोग इति ॥

विनियोगो भक्तियोगप्रतिबन्धविनाशने ।
कृष्णाधरामृतास्वादसिद्धिरत्र न संशयः ॥६॥

भक्तियोगे यः कश्चन प्रतिबन्धः दृष्टादृष्टरूपस्तस्य विनाशने विशेषेण नाशने मूलोच्छेदे एतत्स्तोत्रस्य विनियोगः प्रयोजनमित्यर्थः, अत्र भक्तौ केवलभक्तिपदं विहाय योगपदोपादानाद्भक्तेरनेकविधत्वेन "भक्तियोगो बहुविध" इत्यत्र भक्तेरनेकविधफलसाधकत्वेन निरूपणात् प्रकृते योगपदोपादानं, भगवता सह योगः साक्षात्सम्बन्धः तत्र प्रतिबन्धविनाशनेऽस्योपयोग इत्यर्थः, एवं विनियोगमुक्त्वैतत्साध्यं फलमाहुः कृष्णाधरामृतास्वाद इति, यद्यपि प्रसिद्धार्थस्यातिदुर्लभत्वेन सर्वत्रदेयासम्भवस्तथाप्यत्र स्वादपदोपादानात् आङ् ईषदर्थत्वमेवाभिप्रेतं, तेन यथा गवादीनां वेणुनादश्रवणद्वारेषदनुभवकर्तृत्वं तथैतत्स्तोत्रपाठकर्तॄणामपि यथाधिकारं मुख्याधिकारीतरव्रजवासिवदत्रास्मिन् स्तोत्रे सिद्धिः फलसिद्धिरित्यर्थः. फलसिद्धेरवश्यकत्वज्ञापनार्थमाहुः न संशय इति ॥ ६ ॥

एवं फलपर्यन्तं निरूप्यातःपरं नामनिरूपणप्रस्तावे तद्दैनुकम्परूपस्मरणे जाते तज्जनितानन्दभरेण स्वरूपे केवलानन्दत्वस्फूर्त्या

प्रथमत आनन्दत्वेनैव नामनिरूपणमाहुः आनन्द इति ॥

**आनन्दः परमानन्दः श्रीकृष्णास्यं कृपानिधिः ।**
**दैवोद्धारप्रयत्नात्मा स्मृतिमात्रार्तिनाशनः ॥७॥**

यद्यपि मनस्यस्यानन्दभरवशात्पुरुषोत्तमाक्षरानन्दयोस्तारतम्या-स्फूर्त्या केवल**मानन्द** इत्येवोक्तं तथाप्यग्रिमनामविचार आचार्याणां पुरुषोत्तमास्यत्वेनागणितानन्दस्फूर्त्या गणितानन्दत्वमक्षरेपि वर्तत इत्याचार्येषु तद्व्यावृत्त्यर्थमाह **परमानन्द** इति, **परमः** अगणित "यतो वाचो निवर्तन्त" इतिश्रुतिप्रतिपाद्यो य पुरुषोत्तमानन्दस्तद्रूप इत्यर्थः. ननु पूर्णस्य लोके प्रकटस्य पुरुषोत्तमत्वे किं प्रमाणमितिचेत्तत्राह. **श्रीकृष्णास्यमिति**, श्रीकृष्णपदेन शुद्धभक्तिमार्गीयरसात्मकत्वेन तदास्यस्यापि तथात्वं युक्तमेवेति नाशङ्कनीयङ्किञ्चित्. ननु तदास्यत्वेपि यथा सोऽलौकिके व्रजे प्रकटस्तथा तदास्यस्यालौकिक एव प्राकट्यमुचित ननु लौकिकेष्वित्याशङ्कानिरासायाह **कृपानिधिरिति**, कृपाया निधि निधानं निरुपध्यलौकिककृपाश्रय इत्यर्थः. कृपाविषयाणां लौकिकेष्वेव प्राकट्यात् स्वस्यान्यत्र प्राकट्य एतेषु कृपाविषयत्वासम्भवात् कृपानिधित्वमेव न स्यादिति लौकिकेषु प्राकट्यहेतुत्वज्ञापनार्थमुक्तं **कृपानिधिरिति**, तथापि कृपानिधित्वेपि स्वाङ्गीकृतेषु स्वप्रकटितभक्तिमार्गीयसाक्षाद्भगवत्सम्बन्धरूपफलदानं कथं सम्भवनीत्याशङ्कानिरासाय निधिपदोपादानं. तस्यायमाशयः, यथा समुद्रस्य जलनिधि

त्वेनागाधजलत्वमुच्यते तेन यथागाधे पतितं पात्रं महदल्पं वा पूर्णमेव भवति तथाचार्यप्रकटितभक्तिमार्गाङ्गीकृतानां यथाधिकारं भजनानुभवो भवत्येवेतिज्ञापनाय निधिपदमुक्तं, ननु ते के कृपाविषया यदर्थमलौकिकेषु प्राकट्यमकृत्वा यल्लौकिकेषु प्राकट्यं कृतवांस्तदर्थं कृपाविषयानाहुः दैवोद्धारेति, दैवा भगवदुक्तदैवसृष्टौ प्रादुर्भूता ये जीवास्तेषामुद्धारे यः प्रयत्नस्तस्मिन्नात्मान्तःकरणं यस्य सः, ननु दैवसृष्ट्युत्पन्नानां मुक्तिफलसिद्ध्यर्थं वेदपुराणोक्तसाधनानि सिद्धान्येव सन्तीति किमाचार्यप्राकट्येनेतिचेत्, सत्यं, भगवता पुष्टिमर्यादामार्गभेदेन जीवानामङ्गीकारान्मर्यादामार्गफलसाधकत्वेन पूर्वोक्तसाधनानां मर्यादामार्गीयफलसाधकत्वमस्तु नाम शुद्धपुष्टिमार्गीयाणां मुक्तिफलातिरिक्तसाक्षाद्भगवत्सम्बन्धस्यैव फलत्वात् तत्साधनानामन्यत्राप्रसिद्धत्वेन शुद्धपुष्टिमार्गैकगम्यत्वेन तदितराज्ञानादेतन्मार्गीयाणामनुद्धार एव भवेदित्येतन्मार्गप्रकटनं निरर्थकमेव भवेदत एतन्मार्गीयाणां यथैतन्मार्गफलसिद्ध्योद्धारो भवेत्तदर्थमेवाचार्याणां प्राकट्यमितिज्ञापनायोक्तं दैवोद्धारप्रयत्नात्मेति, दैवाः पुष्टिमार्गीयदैवजीवा इत्यर्थः, शुद्धपुष्टिमार्गाङ्गीकृतजीवानामेतन्मार्गाङ्गीकारबलस्वभावात्तदितरमार्गीये फले फलत्वाभावस्फूर्त्या स्वमार्गीयफलसाधनयोः स्वतोज्ञानात् स्वोद्धारविषयिण्यार्तिः सदा तिष्ठेदेव, यदाचार्यैः प्रकटीभूय शुद्धपुष्टिमार्गप्राकट्यं कृतं स्वीयेषु तदाचार्यचरणारविन्दस्मरणमात्रेणैव स्व-

मार्गीयफलनिश्चयज्ञानात् तत्पूर्वं स्वस्मिन् स्वमार्गीयफलनिश्चयाज्ञानजनितस्वाकृतार्थतार्तिः सर्वापि समूला गतेत्येतज्ज्ञापनार्थमुक्तं **स्मृतिमात्रार्तिनाशन** इति, अथवा स्वकीयेषु स्वमार्गीयासाधारणार्तिनाशकत्वमुक्त्वा साधारणेष्वप्येतच्चरणारविन्दस्मरणस्य तत्तन्मनोनिष्ठार्तिनाशकत्वसामर्थ्यमप्यस्तीतिज्ञापनायोक्तं **स्मृतिमात्रार्त्तिनाशन** इति ॥ ७ ॥

ननु तत्प्रकटितशुद्धपुष्टिमार्गस्य स्वकीयानां तन्मार्गोक्तफलानुभवात् सर्वतोऽव्यभिचारिप्रामाण्यज्ञानमस्त्येव तथाप्याचार्यस्वरूपाज्ञानवतास्पण्डितानामपि कदाचित्तत्प्रवर्तितशुद्धपुष्टिमार्गे तन्मूलाज्ञानाद् प्रामाण्यशङ्का भवेदिति तत्प्रामाण्यार्थं स्वप्रकटितमार्गस्य समूलत्वज्ञापनार्थं तन्मूलज्ञानप्रकाशकत्वमाहु **श्रीभागवतेति** ॥

श्रीभागवतगूढार्थप्रकाशनपरायणः ।
साकारब्रह्मवादैकस्थापको वेदपारगः ॥ ८ ॥

**श्रीभागवत**पदात् तदेवैतन्मार्गे मूलमित्युक्तं, ननु श्रीभागवतमन्यैरपि व्याख्यायत एव यदि तत्राप्ययं मार्गः प्रकटो भवेत्तदान्यैरपि ज्ञायेतेतिशङ्कानिरासायाहु **गूढार्थ** इति, यद्यपि सर्वैरपि श्रीभागवतं व्याख्यायत एव तथापि तत्रत्यो **गूढः** सर्वाज्ञातो **यो र्थः** फलमार्गीयशुद्धपुष्टिमार्गीयफलरूपस्तत्प्रकाशने तत्प्राकट्यकरणे **परायणः** सदैक-

विचारनिष्ठः, एतेन श्रीभागवतगूढार्थविचारकत्वेन साक्षात्फलमार्गीय-पुष्टिमार्गप्रकटनसामर्थ्यमाचार्याणामेव नान्येषामेतन्मार्गाज्ञानादविचार-कत्वमितिज्ञापनायोक्तं **श्रीभागवतगूढार्थप्रकाशनपरायण** इति. ननु श्रीभागवते मुक्त्यादेरपि फलत्वनिरूपणात् कथं भवद्विचारितस्यैव फलत्वमितिचेन् मन्यं, श्रीभागवते शुद्धपुष्टिमार्गीयफलस्यैव फलत्व-कथनादेतस्यैव फलत्वं नान्यस्येति शुकैरपि श्रीभागवतस्य "निगम-कल्पतरो" रितिश्लोके फलनिरूपणे "पिबत भागवतं रसमालयमि"ति-पदैः प्रतिपादितं, ननु तथापि कथं तस्यैव फलत्वमायातीतिचेदत्र वदामः. श्रीभागवतस्य शब्दात्मकत्वाच्छ्रवणस्यैव प्राप्तत्वाच्छृणुतेति-पदमनुक्त्वा यदिमं पिबतेत्युक्तं तेन श्रीभागवते शब्दप्रतिपाद्यः कश्चना-साधारणो रसोस्तीति ज्ञायते, तस्य विचारे क्रियमाणे "तस्यैव हेतोः प्रयतेते"तिश्लोके भक्तावेव पुरुषप्रयत्नस्योक्तत्वाच्छ्रीभागवतप्रतिपाद्यो रसो भक्तिरस एवेति निर्धार्यते. तस्य पानमन्तःप्रवेशनं यथा बहिः-स्थितदुग्धादेर्मुखद्वारान्तःप्रवेशनमेव पानं तथा श्रीभागवतप्रतिपाद्य-भक्तिरसस्याप्यन्तःप्रवेशनमेव पानं. यद्यपि श्रीभागवते "भक्तियोगो बहुविध" इत्यनेकविधभक्तियोगस्तत्तत्फलसाधको निरूपितोस्ति तथापि श्रीभागवते न तस्य मुख्यत्वं मुक्त्यादिफलसाधकत्वात् श्रीभागवतप्रति-पाद्यभक्तिरसस्याल्पयत्वकथनेनात्र आह इयदर्थवाचकत्वेनालयपदस्य मुक्तिवाचकत्वेन मुक्त्यधिकफलसाधकत्वात् शुद्धपुष्टिमार्गीयफलस्यैव

फलत्वं नान्यस्येतिप्रमाणपूर्वकप्रतिपादनसामर्थ्यमाचार्याणामेव नान्येषामपीतिज्ञापनायाहुः**श्रीभागवतगूढार्थप्रकाशनपरायण** इति, ननु पुष्टिमार्गीयफलस्य मुक्त्यादेराधिक्यकथनेन स्वरूपानन्दात्मकत्वात्तदनुभवः कथमित्याकाङ्क्षायामनुभवप्रकारहेतुभूतं नामाहुः **साकारे**ति. **साकारं** यद् **ब्रह्म** तस्य **वादः** सोपपत्तिकं कथनमितियावत् तस्यैव मुख्यत्वेन **स्थापकः** प्रतिपादक इत्यर्थः, अत्रैकशब्दो मुख्यवाची, साकारत्वमुक्त्वा यद् ब्रह्मत्वं निरूपितं तद्यथा ब्रह्म केवलानन्दमयं तथा तत्करचरणादीनामपि केवलानन्दमयत्वं ज्ञापितं, साकारत्वकथनेन पुष्टिमार्गीयफलस्य सर्वेन्द्रियास्वाद्यत्वं फलानुभवप्रकार इत्युक्तं भवति, अत एव श्रीव्रजसीमन्तिनीभिरपि श्रुतिरूपाभिरनेकश्रुतिसम्मत्या "अक्षण्वतां फलमिद"मितिश्लोके फलानुभवप्रकार उक्तः, तेन नानुपपन्नं किञ्चित्, ननु इयदवधि सर्वशास्त्रार्थविचारकैरपि ब्रह्मण. साकारत्वानिरूपणात् कथमाचार्याणामेव साकारत्वनिरूपकत्वमित्याशङ्क्य तत्रोपपत्तिमाहुः**वेदपारग** इति,अत्रायमाशयः.ब्रह्मणः अलौकिकत्वाच्चक्षुरादीनां लौकिकप्रमाणत्वान्न चक्षुरादिगम्यत्वं ब्रह्मणि सम्भवतीति श्रुतीनामलौकिकप्रमाणत्वेन श्रुतय एव ब्रह्मणि प्रमाणमिति तत्प्रतिपाद्यमेव ब्रह्म, तास्तु "स ईक्षाञ्चक्रे तस्मादेकाकी न रमते स द्वितीयमैच्छन् स हैतावानास" इति साकारमेव निरूपयन्ति, गीतासु च"सर्वतः पाणिपादान्त"मित्यादिना च साकारत्वमेवोच्यते, ननु निराकारवादि-

भिरपि निराकारप्रतिपादने "अस्थूलमनण्वह्रस्व"मित्याद्याः श्रुतय एव प्रमाणत्वेनाङ्गीक्रियन्त इति कथं न निराकारत्वसिद्धिरितिचेत्, अत्र वदामः, निराकारत्वप्रतिपादिका अपि श्रुतयो ब्रह्मणि देवाद्याकारवत् प्राकृताकारत्वमेव निषेधयन्ति नत्वानन्दमात्रकरपादमुखोदरादित्वं, यदि सर्वथानिराकारत्वमेव श्रुत्याभिमेतं स्यात्तदा निराकारत्वमुक्त्वाप्यग्रे "स ईक्षाञ्चक्रे" इत्यादिनाकारं नैव प्रतिपादयेयुः, अत एव व्याससूत्रमपि "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति, अस्यार्थः,प्राकृतं यदेतावत्त्वं साकारत्वं तन्निषेधति निराकारश्रुतिः नत्वानन्दैकाकारत्वं, तत्र हेतुः "ततो ब्रवीति च भूयः" इति, ततोऽग्रे भूयः पुनरपि "स ईक्षाञ्चक्रे" इत्यादिना साकारत्वमेव वदतीति, निराकारवादिनां यत्किञ्चिच्छ्रुतिज्ञानवत्त्वेपि सर्वशाखीयोपनिषज्ज्ञानाभावात् तासु च प्रकारभेदेन ब्रह्मनिरूपणात्तत्र परस्परविरोधपरिहारपूर्वकं विषयव्यवस्थया यत् सिध्यति तादृशं ब्रह्मेति मन्तव्यं, निराकारवादिनां सर्वशाखीयोपनिषत्तात्पर्यज्ञानाभावात स्वबुद्ध्यनुसारेण यत्किञ्चिच्छ्रुतितात्पर्यं स्वसिद्धान्तानुसारेण कल्पयित्वा निराकारं वदन्तीति न तदुक्तं प्रमाणमाचार्यैस्तु सर्वशाखीयोपनिषत्तात्पर्यस्य विरोधपरिहारेणावगमात् तत्र च साकारस्यैव निरूपणात् तत्तत्पर्यमवगम्यैव साकारत्वमुक्तमित्यतआहुः वेदपारग इति ॥८॥

मायावादनिराकर्ता सर्ववादिनिरासकृत् ।
भक्तिमार्गाब्जमार्तण्डः स्त्रीशूद्राद्युद्धृतिक्षमः ॥९॥

यद्यपि "साकारब्रह्मवादैकस्थापको" "वेदपारग" इतिनामद्वयार्थ निरूपणेनैव मायावादो निराकृतस्तथापि पुनर्यन्मायावादनिराकर्तेति निरूपित तस्यायमर्थ ,मायामाश्रित्य सर्वस्य मिथ्यात्वमसत्यश्चेत्येवम्रूपो यो वाद स **मायावादः** स सर्वश्रुतिविरुद्ध इतिहेतोस्तन्निराकर्ता, तत्र विरुद्धश्रुतय उच्यन्ते"तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चा-विज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवत् यदिद किञ्च तत् सत्यमित्याचक्षते तदप्येष श्लोको भवति" "सर्वं खल्विदम्ब्रह्म"त्यादिश्रुतिविरुद्धत्वा-त्तन्मतनिराकरण कृतवानित्येतज्ज्ञापनार्थमुक्त **मायावादनिराकर्तेति**।

एवम्मायावाद निराकृत्य तदितरशास्त्राणामपि श्रुतिविरुद्धत्वात् तन्मतानुसारिणा वादिनामपि श्रुतिमतानुसारेणैव निराकर्तेतिज्ञापना-र्थोक्त **सर्ववादिनिरासकृदिति**, यद्यपि मायावादिन्यायेन सर्वस्यापि जगतस्ते मिथ्यात्वन्न मन्यन्ते तथापि नैयायिका ईश्वरे ज्ञानेच्छाप्रयत्ना-तिरिक्तान् श्रुत्युक्तानानन्दमयत्वादीन्धर्मान्न मन्यन्ते मीमांसकास्त्वी-श्वरमेव न मन्यन्ते साङ्ख्यादयोपि तथेत्येतन्मतं श्रुतिविरुद्धमिति

१ सर्ववादनिरासकृदिति पाठ ।

तन्निवारकत्वायोक्तं सर्ववादिनिरासकृदिति ।

ननु लोके प्रसिद्धानां कर्मज्ञानप्रतिपादकशास्त्राणां वेदविरुद्धत्वेन निराकृतत्वात्तत्त्वस्य कस्मिन् शास्त्रे कस्मिन् धर्मे च निष्ठेतिशङ्कानिरासायाहुः भक्तिमार्गाब्जमार्तण्ड इति, भक्तिमार्गरूपं यदब्जं तस्य मार्तण्डः प्रकाशक इत्यर्थः, स्वस्य भक्तिमार्गप्रकाशकत्वोक्त्या भक्तिशास्त्रे गीताभागवतादिकं तच्छास्त्रनिष्ठत्वं तदुक्तधर्माचरणत्वञ्च ज्ञापितं,यद्यप्यत्र कर्मज्ञानादिकमपि प्रतिपाद्यते तथापि न तत् फलत्वेन मुख्यतया,"नाहं वेदै"रिति "योगिनामपि सर्वेषामि"ति "ब्रह्मभूत प्रसन्नात्मे"त्यादिभिर्गीतासु ब्रह्मभावानन्तरमपि भक्तिलाभस्यैव मुख्यत्वेन निरूपणात्, श्रीभागवतेपि"अनिमित्ता भागवती भक्तिर्मुक्तेर्गरीयसी" "भजतामुकुन्दो मुक्तिन्ददाति कर्हिचित्स्म न भक्तियोगं" "सामीप्यसार्ष्टिसालोक्यसायुज्यैकत्वमप्युत दीयमानं न गृह्णन्ति विना मत्सेवनञ्जना." "स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः" "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः न ज्ञानञ्च वैराग्यम्प्रायः श्रेयो भवेदिहे"त्यादिभिर्भक्तिरेव प्रतिपाद्यत इति गीताभागवतादीनाम्भक्तिशास्त्रत्वं, अत्र भक्तिमार्गस्याब्जत्वोक्त्या मार्गान्तरापेक्षयास्य मार्गस्य सुखदत्वं ज्ञापितमाचार्याणाम्मार्तण्डत्वोक्त्या यथाब्जप्रकाशको मार्तण्ड एक एव तथा पुष्टिभक्तिमार्गप्रकाशका आचार्या एव नान्ये यथा प्रकाशिताब्जरसभोक्तारोलय एव तथैतत्प्रकाशितमार्गरसभोक्तार

एतदङ्गीकृता एव नान्य इत्यपि ज्ञापित, यथा मार्तण्डोन्येषान्ता-पजनकोप्यऽनाना प्रकाशस्त्वेन सुखजनकस्तद्वदाचार्याणामपि भक्ति मार्गातिरिक्तमार्गीयाणा तापजनकत्वम्भक्तिमार्गीयाणा भक्तिप्रकाशक स्त्वेनात्यन्तसुखदत्वमितिज्ञापनायाप्युक्त भक्तिमार्गाब्जमार्तण्ड इति ।

यद्यपि मर्यादामार्गीयभक्तिमार्गानुवर्तिनामपि तन्मार्गोक्तफलसिद्ध्या कृतार्थत्वमस्त्येव तथापि तत्र पुरुषशरीरम्प्राप्तानाम्ब्राह्मणानामेव मुक्त्यधिकारो नान्येषामिति यथा मुचुकुन्दस्य भगवद्दर्शनानन्तर भक्तिसिद्धावपि ब्राह्मणत्वाभावाद्भगवतापि न मुक्तिर्दत्ता किन्त्वाग्रिमजन्मनि ब्राह्मणत्व सम्पाद्यैव मुक्तिर्दत्तेति मर्यादामार्गो न सर्वेषाम्फलसाधक, आचार्यप्रकटितपुष्टिभक्तिमार्गस्तु तदङ्गीकृतजीवमात्रस्यैव तन्मार्गोक्तफलसाधक इतिज्ञापनायोक्त स्त्रीशूद्राद्युद्धृतिक्षम इति, क्षम इति-पदेन स्वत एव स्वसामर्थ्येन स्वकीयानाम्फलसाधनसमर्थ इत्यर्थ ॥९॥

ननु पुष्टिमार्गफलसिद्धावपि सर्वत्यागपूर्वक सर्वात्मभावादिक साधनत्वेन श्रूयते तत् कथमाचार्यप्रकटितमार्गे केवलाचार्याङ्गीकारमात्रेणैव तत्फलसिद्धिरिति चेत्तत्राहुरङ्गीकृत्यैव गोपीशवल्लभीकृत-मानव इति ।

अङ्गीकृत्यैव गोपीशवल्लभीकृतमानवः ॥
अङ्गीकृतो समर्यादो महाकारुणिको विभुः ॥१०॥

अत्रायमाशय, सर्वात्मभावादिनापि फलसिद्धौ भक्तेषु भगव

प्रियत्वमेव हेतुर्नान्योस्तीतिनिश्चयः, भगवत्प्रियत्वं केवलफलमार्गीय-शुद्धपुष्टिमार्गप्रवर्तकाचार्याङ्गीकारेणैव चेत् सिद्धं किं साधनान्तरकथनेनेत्यत उक्तमङ्गीकृत्यैव गोपीशवल्लभांघ्रिकृतमानव इति, अत्र भगवन्नामान्तरमनुक्त्वा यद्गोपीशपदोपादानं तत् प्रभोरेतद्भक्तसम्बन्धिलीलापरवशत्वादाचार्याणामप्येतल्लीलापरवशत्वेन तन्मध्यपातित्वेनातिप्रियत्वात् कृपया तदङ्गीकृतेषु स्वमार्गीयप्रभुप्रियत्वे किं वक्तव्यमित्येतज्ज्ञापनार्थमुक्तमङ्गीकृत्यैव गोपीशवल्लभांघ्रिकृतमानव इति ।

नन्वङ्गीकृतौ कः प्रकार इत्याकाङ्क्षायामङ्गीकारप्रकारमाहुरङ्गीकृतौ समर्यादः इति, अङ्गीकृतौ अङ्गीकारे समर्यादः स्वमार्गीयमर्यादासहितः, सा केत्याकाङ्क्षायामुच्यते, यस्त्वहम्मुक्त्यधिकं साक्षाद्भगवत्सम्बन्धं प्राप्य कृतार्थो भवामीतिबुद्ध्या साक्षात्फलरूपभक्तिमार्गप्रवर्तकत्वेनाचार्यस्वरूपं ज्ञात्वा तदीयत्वेनैव स्वमनोरथसिद्धिं ज्ञात्वा मां स्वकीयं कुर्वितिप्रार्थनया प्रपन्नो भवति तं कृपया स्वमार्गमर्यादोक्तप्रकारेण स्वसमीपं नीत्वा स्वमार्गीयोपदेशप्रकारेणोपदिश्य भगवति निवेद्य पश्चात् स्वीयत्वेनाङ्गीकरोति सोऽस्मिन्मार्गेङ्गीकारप्रकार इतिज्ञापनायोक्तमङ्गीकृतौ समर्याद इति ।

ननु जीवस्तु स्वकृतार्थतासिद्ध्यर्थं प्रपत्त्यादिकं यद्यपि करोति तथाप्याचार्याणाम्मुक्त्यधिकस्वमार्गीयसाक्षाद्भगवत्सम्बन्धसम्पादने को हेतुरिति चेत्त्राहुर्महाकारुणिक इति, यद्यपि मर्यादामार्गीयाचार्या

अपि मुक्तिदातृत्वेन कारुणिका एव भवन्ति तथाप्याचार्याणान्ततोप्यधिकपुष्टिभक्तिमार्गीयसम्बन्धसम्पादकत्वान्महाकारुणिकत्वम् ।

ननु मर्यादामार्गीयफलाधिकभक्तिमार्गीयफलसाधकत्वेन महाकारुणिकत्वमुक्तं तथापि इयदवध्येतत्फलसाधकत्वं कस्यापि कुत्रापि न दृष्टं न वा श्रुतमिति कथमहाकारुणिकत्वेप्येतत्फलसम्पादकत्वमेतेषामेव घटत इत्याशङ्कापरिहारार्थमाहुर्विभुरिति, विभुः सर्वकरणसमर्थः, एतेनेयदवधीतित्वदुक्तानुपपत्तिरपि परिहृता, तत्रेयमुपपत्तिः, यद्यपि पूर्वम्भक्तिमार्गीया बहव एव आचार्या जातास्तथापि "भक्तियोगो बहुविध" इतिश्रीभागवतात् तत्तन्मार्गीयसाधनफलविचारभेदेन तत्तन्मार्गीयसाधनफलपरत्वमेव तेषां न तु शुद्धपुष्टिमार्गीयसाधनफलविचारगन्धोपि तत्र सम्भवतीति कुतो दानसामर्थ्यसम्भव इत्याचार्याणां सर्वतोधिकसामर्थ्यज्ञापनायोक्तं विभुरिति ॥१०॥

ननु शुद्धपुष्टिमार्गीयफलदानसामर्थ्यवत्त्वेपि तन्मार्गीयफलस्याप्यद्यापि "यत्पदरजः श्रुतिमृग्यमेवे" तिवचनाच्छ्रुत्याद्यनेकभक्तदुःप्राप्यत्वेनातिदुर्लभत्वात् कथं ददातीति चेत्तत्राहुरदेयदानदक्षश्चेति ।

अदेयदानदक्षश्च महोदारचरित्रवान् ॥
प्राकृतानुकृतिव्याजमोहितासुरमानुषः ॥११॥

यदि पुष्टिमार्गातिरिक्तमर्यादामार्गीयश्रवणादिसिद्धमुक्तिफलं स्वयमपि

दद्यात्तर्हीतरसाधारणत्वाद्भगवदाज्ञया स्वप्राकट्येन शुद्धपुष्टिमार्गप्रवर्तकत्वेन यदि मुख्याधिकफलं न दद्यात्तर्हि स्वस्य प्रकटितशुद्धपुष्टिमार्गस्य च प्राकट्यमसाधारणप्रयोजनाभावाद्व्यर्थमेव भवेदत उक्तमदेयदानदक्षश्चेति, अदेयं भगवदतिरिक्तेन यद्दातुमशक्यं तस्यापि दाने दक्षोतिसमर्थ इत्यर्थः, यद्यप्येवं तर्हीतरमार्गसाधनप्राप्यमुक्त्यादिफलदाने सामर्थ्यन्न भविष्यतीत्याशङ्कानिरासायात्र चकारः समुच्चयार्थः, यस्य सर्वाशक्यफलदाने सामर्थ्यमितरशक्यफलदाने कः प्रयास इत्यपि च ज्ञापितम्भवति ।

यद्यप्यदेयदानसामर्थ्यमस्त्येवाचार्याणां तथापि दाता पात्रापात्रविवेकेनैव ददातीति तथात्राप्याचार्याणामपि स्वमार्गीयफलदानं भविष्यतीत्याशङ्कानिरासायाहुर्**महोदारचरित्रवा**निति, यदि केवलं दातृत्वमेव भवेत्तदा पात्रापात्रविवेकेनैव दानमुचितं भवेदाचार्याणां तु दानं न केवलं किन्त्वौदार्यसहितं, केवलदानस्यौदार्यविशिष्टदानस्यैव चैतावान् विशेषः, केवलदाता तु देशकालविचारपूर्वकं फलोद्देशपूर्वकं पात्रपात्रविवेकपूर्वकं ददात्युदारस्तु देशादिकमविचार्यैव स्वस्य सहजौदार्यधर्मेणैव ददाति न तु पूर्वोक्तं किञ्चिद्विचार्यापि, अयन्तु साधारणौदार्यधर्म उक्तः, आचार्याणान्त्वलौकिकत्वेनासाधारण्यात्तदौदार्यस्याप्यसाधारणत्वज्ञापनायोक्तम्महोदारचरित्रवानिति, औदार्येलौकिकत्वेनासाधारण्यमुक्त्वा यन्महत्त्वमुक्तं तत् स्वमार्गीयालौकिकफल-

दानौदार्यज्ञापनायोक्तं, महोदारचरित्रवानिति महोदारं यच्चरितं तद्वांस्तद्युक्तः, अतः स्वप्रकटितभक्तिमार्गैकनिष्ठजीवेष्वविचारेणैतत्फलदानेन विरुध्यत इति सर्वमनवद्यं, महोदारचरित्रवत्त्वकथनेनाचार्येष्वयन्धर्मः स्वाभाविको नागन्तुक इत्यपि ज्ञापितम्भवति ।

ननु पूर्वोक्तनामनिरूपितसामर्थ्यवत्त्वं केवलं पुरुषोत्तम एव सम्भाव्यते न तदतिरिक्ते आचार्याणान्तु प्राकृत प्रपञ्च एव प्रादुर्भावात् तद्धर्मवत्त्वेन च प्रतीयमानत्वात् कथं पूर्वोक्तसर्वसामर्थ्यवत्त्वे सम्भवतीत्येतदाशङ्कानिरासाय लौकिकप्रपञ्चप्राकट्येपि तद्धर्मवत्त्वप्रतीतावपि यथा पुरुषोत्तमत्वं सिध्यति तत्सिद्धिप्रकारज्ञापनायाहुः प्राकृतानुकृतिव्याजमोहितासुरमानुष इति, प्राकृताः साधारणास्तेषामनुकृतिरनुकरणं तद्व्यवहरणं सैव व्याजस्तेन मोहिता असुरा असुरसृष्टावुत्पन्ना मानुषा मनुष्या येन सः, नन्वीश्वरस्य प्राकृतानुकरणं दृष्ट्वा देवानामपि मोहः सम्भाव्यत इति कथमासुरजीवानामेव मोहकत्वमिति चेत् सत्यं, प्राकृतानुकरणजनितमोहो यत्र दृष्टस्तत्रासुरजीवानामथवा तद्धर्मावेशिनां कंसपूतनादीनां, तथा "तां वीक्ष्ये" तिश्लोकेलौकिकधर्मवत्त्वेन गर्भेपु पुरुषोत्तमस्थितिं ज्ञात्वापि पश्चान्निग्रहादिकं यत् कृतवान् तत् प्राकृतवज्जन्मादिज्ञाननिमित्तकमेव, अग्रेपि श्रीगोकुले प्रभुप्राकट्यज्ञानानन्तरमपि पूतनादिप्रेषणं पूतनादीनामपि यन्निश्शङ्कं भगवद्गृहे प्रवृत्तिःसापि " बालप्रतिच्छन्ननिजोरुतेजस "मित्यनेनालौकिकधर्माच्छादनपूर्वकं

केवलप्राकृतबालकतुल्यधर्मानुकरणदर्शननिमित्तिकैव, शुद्धदेवानां ब्रह्मादीनां लौकिकानुकरणतुल्यगर्भस्थितिज्ञानवत्त्वेपि पुरुषोत्तमत्वेन स्वपक्षपातित्वेन च स्तुत एव जातो न तु प्राकृतधर्मानुकृतिदर्शने-नान्यथाबुद्धिर्जातेत्येतावत्सर्वं, यथा भगवति इदं तद्वदत्राप्याचार्य-स्वरूपज्ञानवतांभक्तानां स्वोद्धारकज्ञानवत्त्वेन लौकिकानुकरणदर्शनेपि पुरुषोत्तमत्वप्रतीतिरेव न त्वासुरजीववदन्यथाप्रतीतिरपि इत्यन्त इत्येतावत्सर्वधर्मतुल्यत्वज्ञापनायोक्तम्प्राकृतानुकृतिव्याजमोहितासुर-मानुष इति ॥११॥

यद्यप्येवं लौकिकानुकृतित्वेऽपि सोपपत्तिकम्पुरुषोत्तमत्वं निरूपितं तथाप्याचार्येषु शुद्धफलरूपपुष्टिमार्गप्रवर्त्तकत्वं तस्य च श्रुतिस्मृत्या-द्यनेकप्रमाणैः सर्वाधिकत्वज्ञापनं स्वप्रवर्तितभक्तिमार्गाङ्गीकृतजीवेषु तन्मार्गबोधनेन तत्कृतार्थीकरणमित्यादिकम्पुरुषोत्तमस्वरूपेप्यप्रतीतं कथम्प्रतीयते तत्र को हेतुरित्याशङ्क्य तत्प्रतीतौ पुरुषोत्तममुख्यावय-वरूपत्वमप्यत्रास्तीतिज्ञापनाय तद्धेतुभूतन्नामाहुर्वैश्वानर इति ।

वैश्वानरो वल्लभाख्यः सद्रूपो हितकृत्सताम् ॥
जनशिक्षाकृते कृष्णभक्तिकृन्निखिलेष्टदः ॥१२॥

वैश्वानरपदा"दग्निर्मुख"मितिश्रुत्या पुरुषोत्तममुखरूपत्वमनेनोक्तं तेन तन्मुखस्वरूपाग्नेराधिदैविकत्वमानन्दरूपत्वम्मुखे वागप्यस्तीतिवाग्रूप-त्वञ्च, आचार्याणाम्पुरुषोत्तमवाग्रूपत्वेन शुद्धपुष्टिमार्गप्रवर्तकत्वे या

अनुपपत्तयं आशङ्किताश्ताः सर्वाः परिहृता वेदितव्याः; "अधिकन्त्वत्रानुपविष्टं न तु तद्धानि"रितिन्यायेन नानुपपत्तिःकाचित् ।

ननु वैश्वानरत्वेन पुरुषोत्तममुखारविन्दसम्बन्धिलौकिकाग्निरूपत्वेनासह्यतेजोरूपत्वाद्भक्तानां सेवने बाधकत्वात् सेवा न सिध्येदित्याशङ्क्य तेजोरूपत्वेऽपि सेवासिद्धौ बाधकत्वाभावायाहुर्वल्लभाख्य इति, वल्लभ इति आख्या नाम यस्य स वल्लभाख्यः, पूर्वनाम्नि वैश्वानरत्वमुक्तमग्निमनाम्नि यद्वल्लभाख्यत्वमुक्तं तस्यायमाशय, यथा शीतकाले स्वभावतोऽप्यग्निः सर्वस्यापि शीतनिवारकत्वेन प्रियो भवति न तु तदतिरिक्तकालेष्वपि तद्वदाचार्यसेवकानामप्याचार्येषु सदालौकिकतेजःप्राकट्येन लौकिकाग्निसेवनमिव कदाचित्सुखदत्वं कदाचिन्नेतिशङ्का भवेदिति तच्छङ्कानिराकरणायाप्युक्तं वल्लभाख्य इति, तस्यायमाशयः, लौकिकाग्निः प्राकृत इति तत्तेजसि तारतम्यादल्पत्वबहुत्वाभ्यां कदाचित् प्रियः कदाचिन्नेतीयं व्यवस्था तत्र सार्वदिकी, आचार्याणान्तु पुरुषोत्तमास्यत्वेन तत्तेजसोऽप्यानन्दरूपत्वेन सर्वदातिप्रियत्वमेव न तु कदाचित् प्रियत्वे तारतम्यमपीतिज्ञापनायाप्युक्तं वल्लभाख्य इति ।

ननु लोके सदाप्रियेऽपि पदार्थे केनचिन्निमित्तेन कदाचिदप्रियत्वमपि भासते तथा प्रकृतेऽपि कदाचिन्निमित्तवशात्तथात्वं भविष्यतीत्याशङ्कानिरासायाहुः सद्रूप इति, अस्यायमर्थः, वस्तुविचारे क्रियमाणे

स्वतःसुखमेव प्रियत्वं त्वन्यदन्येषां यत् प्रियत्वं तत्सुखहेतुत्वेन न तु सुखरूपत्वेन, लौकिकपदार्थानाम्प्रकृतिसम्बन्धात् स्वतःसुखरूपत्वाभावात् समयविशेषे सुखहेतुत्वमेव तेषां न तु सुखात्मकत्वेन सर्वदा प्रियत्वमेव, आचार्याणान्तु पुरुषोत्तमास्यत्वेनानन्दरूपत्वात् स्वभावतस्तस्यैव प्रियत्वात् लौकिकपदार्थवत् प्रियहेतुत्वं सम्भवतीत्याशङ्कानिरासायोक्तं सद्रूप इति, सद्रूपत्वेन केवलं सत्तामात्रन्न विवक्षितं किन्तूपलक्षणत्वेन सच्चिदानन्दरूपत्वमप्युक्तम्भवतीति नात्र लौकिकपूर्वपक्षावसरोपि सम्भवतीत्येतावत्सर्वं हृदिकृत्वाहुः सद्रूप इति ।

ननु पूर्वनाम्नि सद्रूपत्वोक्त्या सच्चिदानन्दरूपत्वेन निरवध्यानन्दरूपत्वेन सर्वदाप्रियत्वं प्रतिपादितं भक्तानां तथापि प्रिये स्वभावानुसारेण मनोरथोत्पत्तेरावश्यकत्वात् तत्पूर्वभावजनितखेदेन तदंशे प्रियत्वांशस्यापि तिरोभावः सम्भवेदित्याशङ्कानिरासायाहुः हितकृत् सतामिति, सतां भक्तानां तत्तद्भावभेदेन तत्तन्मनोरथपूर्त्या शीघ्रमेव सम्पादयति न तु तत्सम्पादने विलम्बमपि सहत इतिज्ञापनायोक्तं हितकृत् सतामिति, एतेन सर्वदाप्रियत्वानुपपत्तिपूर्वपक्षो निरस्तः ।

यद्यपि स्वभक्तेषु पूर्वोक्तैः स्वनामभिः स्वस्वरूपं ज्ञापितं तथापि स तु न वचनमात्रैकगम्य इति तेषाम्भजनप्रकारशिक्षार्थं स्वयं भजनं करोतीत्येतज्ज्ञापनायाहुः जनशिक्षाकृते कृष्णभक्तिकृदिति, जनाः सेवकास्तेषां शिक्षा शिक्षणं तत्कृते तन्निमित्तं कृष्णस्य सदानन्दस्य

फलरूपस्य भक्तिभजनं तत्कृत् तत्कर्तेत्यर्थः; ननु भगवद्भजनप्रकाराः पुराणागमसिद्धाः सन्त्येव तद्द्वारा स्वीयेषु शिक्षणसिद्धावपि यत्तच्छिक्षार्थं स्वस्य भजनकर्तृत्वमुक्तं तत्रायमाशयः, यद्यपि पुराणागमादिषु भजनप्रकाराः सन्ति तथापि न ते भक्तिमार्गीयाः, पूजामार्गीयत्वेन न पुरुषोत्तमपर्यवसायिनः, किन्तु तद्विभूतिपर्यवसायिनस्तत्प्रतिपाद्यगोपालादिमन्त्रदेवतानाम्मन्त्राधीनत्वात्, पुरुषोत्तमस्य तु "न रोधयति मां योगो न साङ्ख्यं धर्म उद्धवे"त्यादिवचनैः सर्वानधीनत्वोक्तिपूर्वकं केवलभक्त्यधीनत्वनिरूपणेन स्पष्टमेव वैलक्षण्यमिति न तदुक्तप्रकारस्य भक्तिमार्गीयत्वमित्येतज्ज्ञापनार्थमुक्तं कृष्णभक्तिकृदिति, यदि स्वकीयानां स्वमार्गीयभजनप्रकारं स्वयं कृत्वा न शिक्षयेत् तदा स्वमार्गीयभजनप्रकाराज्ञानात् स्वकीयानामपि प्रकारान्तरभजनकरणेन तत्कृतभजनस्य भक्तिमार्गीयत्वमेव न स्यादित्यत उक्तज्ञनाशिआकृते कृष्णभक्तिकृदिति, स्वकरणेन्यथा स्वमार्गे भगवद्भजनस्यैव पुरुषार्थत्वं नान्यस्यापीतिज्ञापनायाप्युक्तज्ञनाशिनेत्यादि, भक्तिमार्गे भजनीयस्य पुरुषोत्तमत्वेन पूजामार्गे पूज्यदेवतायाः पुरुषोत्तमविभूतित्वेन पूजाभक्तिमार्गयोरपि फलतारतम्यमुक्तम्भवतीति नातःपरमधिकं वाच्यमिति सर्वमवदातं, कृष्णपदस्य फलवाचकत्वेनैतन्मार्गीयभजनस्य फलरूपत्वमेव न तु मार्गान्तरीयभजनवत् साधनरूपत्वमपीति ज्ञापितं, यद्यपि भक्तिपदस्य स्नेहवाचकत्वेपि यद्भजन-

परत्वमुक्तं तत् स्नेहस्य कृतिसाध्यत्वाभावादत्र च भक्तेः कृति-साध्यत्वोक्त्या भक्तिपदं भजनपरमेव न स्नेहपरमितिज्ञापनायोक्तं भक्तिकृदिति।

ननु स्वीयानां स्वमार्गीयभजनादिशिक्षार्थं स्वस्यैवैतावत्करणस्य किं प्रयोजनमित्याशङ्कानिरासायाहुर्निखिलेष्टद इति, निखिलं यत् स्व-मार्गीयमिष्टं भगवत्स्वरूपसम्बन्धि वाञ्छितं तद्ददातीति निखिलेष्टदः, यदि स्वयमेतावत् कृत्वा स्वीयानां स्वमार्गीयभजनं न शिक्षयेत् तर्हि स्वमार्गे भजनमेव मुख्यमिति स्वीयानां तदज्ञानान्निखिलेष्टदत्वमेव न स्यादत उक्तं निखिलेष्टद इति ॥ १२ ॥

सर्वलक्षणसम्पन्नः श्रीकृष्णज्ञानदो गुरुः ॥
स्वानन्दतुन्दिलः पद्मदलायतविलोचनः ॥१३॥

एवम्पूर्वनाम्नि निखिलेष्टदत्वमुक्त्वापि यत् सर्वलक्षणसम्पन्न इत्यु-क्तं तस्यायमर्थः, सर्वलक्षणसम्पन्न इति, भक्तिमार्गीयभजनशिक्षणेन यन्निखिलेष्टदत्वमुक्तं तावतैव भक्तिमार्गीयसर्वेष्टदातृत्वन्न सिद्धं किन्तु भक्तिमार्गस्यानेकविधान्येव लक्षणानि सन्ति भावभेदकृतानि तद्दा-तृत्वव्यतिरेकेण न सर्वार्थदातृत्वं सम्भवति तद्दातृत्वं तल्लक्षणसम्पत्ति-व्यतिरेकेण न सम्भवतीति तद्दातृत्वसामर्थ्यज्ञापनार्थमुक्तं सर्वलक्षण-सम्पन्न इति।

तद्दातृत्वमेव प्रकटयन्ति श्रीकृष्णज्ञानद इति, श्रीकृष्णपदेन स्वा

त्मकभक्तसाहित्योक्त्या भक्तिमार्गीयफलात्मकत्वमुक्तं, तस्य यज्ज्ञानं तद्ददातीति श्रीकृष्णज्ञानदः, ननु भगवज्ज्ञानोत्पत्तिप्रकारा गीताभागवतादावुक्ता एवेति तैरेव ज्ञानसिद्धौ किमेतज्ज्ञानदानेनेति चेत् सत्यं, यद्यपि तत्र ज्ञानप्रकारा उक्तास्तथापि क्वचित् सर्वात्मकत्वेन क्वचिज्जगद्व्यापकत्वेन क्वचित् केवलज्ञानात्मकत्वेन न तु "रसो वै स" इतिश्रुतिप्रतिपाद्यरसात्मकत्वेनापि निरूपितास्तेषाम्मर्यादामार्गीयत्वादाचार्यप्रकटितभक्तिमार्गाङ्गीकृतानां ते न मनोरमा इति स्वमार्गीयज्ञानविषयस्य तद्वैलक्षण्यज्ञापनार्थं श्रीकृष्णज्ञानद इत्युक्तं, यद्यपि शुककपिलनारदादीनां ज्ञानदातृत्वमस्ति तथापि तेषां मर्यादामार्गीयत्वात्तद्दत्तज्ञानस्यापि मर्यादामार्गीयत्वमेवेति न त्वाचार्याणामिव शुद्धपुष्टिमार्गीयज्ञानदातृत्वमपीतिज्ञापनार्थमुक्तं श्रीकृष्णज्ञानद इति ।

पूर्वं श्रीकृष्णज्ञानद इति यदुक्तं तद्धेतुभूतत्वमाहुर्गुरुरिति, यो यन्मार्गीयोपदेष्टा यन्मार्गीयफलदाता च स तस्मिन्मार्गे गुरुर्भवति यथा कपिलादयः, तथा शुद्धपुष्टिमार्गोपदेष्टृत्वन्तन्मार्गीयफलदातृत्वञ्चाचार्याणामेव नान्येषामपीतिज्ञापनायोक्तं गुरुरिति ।

ननु यद्यपि कपिलस्य मातरम्प्रति योगमार्गोपदेष्टृत्वं वर्तते तथापि "भक्तियोगो बहुविध" इतिवचनात् केवलमर्यादामार्गीयभक्तिमार्गोपदेष्टृत्वमपि श्रूयत आचार्याणान्तु प्रसङ्गादपि शुद्धपुष्टिमार्गादतिरिक्तभक्तिमार्गनिरूपणे को हेतुरिति चेत्तत्राहुः स्वानन्दतु.

इति, स्वस्य य आनन्दस्तेनैव तुन्दिलोतिपुष्ट इत्यर्थ, आनन्दे स्वपदोपादानेनागणितो मनोरथान्तो य आनन्दस्तेनैवात्यन्तपुष्टत्वनिरूपणेन तदतिरिक्तस्य सर्वस्याप्यतितुच्छत्वेनास्य च सर्वविस्मारकत्वेनेतरानुसन्धानाभावात् प्रसङ्गादपि नान्यभक्तिमार्गनिरूपकत्वमितिज्ञापनायोक्त स्वानन्दतुन्दिल इति ।

पूर्वनामोक्तानन्दपुष्टत्वज्ञापनायाग्रिमनामाहु पद्मदलायतविलोचन इति, पद्मदलवत् आयते विशाले लोचने यस्य स, अत्र लोचनयो पद्मदलसादृश्यनिरूपणेन शैत्य सुखदत्व सौगन्ध्यमारक्तरेखावत्त्वञ्च ज्ञापित, तेन भक्ताना तल्लोचनदर्शनमत्यन्तसुखदमिति ज्ञापित, यद्यपि पद्मदलदृष्टान्तनिरूपणेन सूचिता धर्मा लोचनयो सहजास्तथापि विशिष्टोपादानात् पूर्वोक्तानन्दवैशिष्ट्यमपिज्ञापितम्॥१३॥

एवमाचार्यविलोचनस्वरूप निरूप्य स्वीयभक्तेषु तत्कार्यमाहु कृपादृग्वृष्टिसंहृष्टदासदासीप्रिय इति ।

कृपादृग्वृष्टिसंहृष्टदासदासीप्रियः पतिः ॥
रोषदृक्पातसम्प्लुष्टभक्तद्विड् भक्तसेवितः ॥१४॥

कृपायुक्ता दृश कृपाकटाक्षास्तासा या वृष्टयो निरन्तर वर्षणानि सर्वत प्लावन ताभि संहृष्टा अत्यन्तमानन्दिता दासा दास्यश्च तेषा प्रियः, दृष्टिजनितहर्षे सम्यक्त्वकथनात् दृष्टिजनितार्द्रतायास्त

दीयेषु न कदाचिदपगम इति ज्ञापित, अथवा कृपादृग्वृष्टिसदृग्

दासदास्यः प्रिया यस्य स तथा ।

यद्यपि पतित्व लोकेऽपि दृश्यते तथापि तत्र पतित्वलक्षणाभावात्पति त्वमौपचारिकमेव न स्वाभाविकमाचार्येषु तु "स वै पति स्यादकुतो भय स्वय समन्तत पाति भयातुरञ्जन"मितिलक्षणम्पतित्वमत्रैवास्ति, स्वस्य कालादिभयराहित्येन स्वशरणगताना कालादिभयनिवारकत्वेन पूर्वोक्तम्पूर्णम्पतित्वलक्षणमत्रैवास्ति नान्येष्वपीतिज्ञापनायोक्त पतिरिति।

ननु पतित्वेन स्वीयाना कालादिभयनिवर्तकत्वमस्तु तथापि लोकोत्पन्नासुरजीवाना स्वप्रतिपक्षत्वेन तद्द्वेषकारित्वम्भविष्यतीत्या शङ्क्य तद्भयनिवारकत्वसामर्थ्यमप्यत्रास्तीतिज्ञापनायाह रोपदृक्पा तसम्प्लुष्टभक्तद्विडिति, रोपसहिता या दृक् कटाक्षस्तस्या पातस्तेन सम्यक्प्रकारेण प्लुष्टा दग्धा भक्तद्विषो येन स , दाहे सम्यक्त्वोक्त्या दग्धानाम्पुनरुत्थानाभाव सूचित , अत्र भक्ताद्विषामेव दाहकथनेनो दासीनेषु रोपदृक्पाताभावाद्दाहाभाव सूचित ।

यद्यपि भक्तसेवितत्व सदास्त्येव तथापि भक्तसेवितत्वकथनेन पूर्वोक्तनामप्रकटितसामर्थ्यदर्शनेन लौकिकस्वानिष्टनिवर्तकज्ञानजनि तानन्दविशेषभरेण क्षणमात्रमपि सेवावियोगासहिष्णुतया भक्ताना सेवाकरणत्वज्ञापनायोक्त भक्तसेवित इति ॥१४॥

सुखसेव्यो दुराराध्यो दुर्लभाङ्घ्रिसरोरुहः ॥
उग्रप्रतापो वाक्सीधुपूरिताशेषसेवकः ॥ १५ ॥

ननु भक्तानां बाहुल्यादनेकविधभाववत्त्वेन सर्वेषां सर्वभावपूर्तिसम्पादकत्वेन सेवनन्न भविष्यतीत्याशङ्कानिरासायाहु. सुखसेव्य इति, सुखेनैव सेव्य इत्यर्थः, अयमाशय, यद्यपि भक्तबाहुल्यमस्ति तथापि यो यद्भावापत्त्या यथा सेवा कर्तुमिच्छति तस्य तद्भावपूर्त्तिप्रकारेणैव सुखसम्पादकत्वेनैव सेवामङ्गीकरोतीतिज्ञापना योक्तं सुखसेव्य इति ।

ननु भक्तानां सुखसेव्यत्व इष्टान्येषामपि सुखसेव्यत्वम्भाविष्यतीत्याशङ्कानिरासायाहुर्दुराराध्य इति, भक्तातिरिक्तानामत्यतिकष्टेन कदाचित्तोषमात्रजनकत्वं सम्भवति न तु सेवाकरणमपीतिज्ञापनायोक्तं दुराराध्य इति ।

ननु पूर्वं भक्तानामेव सुखसेव्यत्वमुक्तवान्येषां कष्टेनापि सन्तोषमात्रकथने को हेतुरित्याशङ्कानिरासायाहुर्दुर्लभाङ्घ्रिसरोरुह इति. अत्र भक्तानामङ्घ्रिसरोरुहयोः कष्टेन प्राप्यत्वकथनेन तत्कष्टस्यालौकिकत्वमुक्तम्भवति, अङ्घ्रिसरोरुहयोर्लौकिकत्वेन लौकिककष्टप्राप्यसम्भवात्, तेन दुर्लभाङ्घ्रिसरोरुहत्वकथनेन दु खेन चरणारविन्दप्राप्त्यार्तिरूपेण प्राप्ये चरणसरोरुहे यस्य स, यत्र भक्त-

नामपीयं व्यवस्था तत्रान्येषान्तत्सम्बन्धः सुतरां दूरापास्त इति नाधिकं वक्तव्यमिति सर्वमनवद्यम् ।

एवम्पूर्वनामार्थनिरूपणेन भक्तातिरिक्तानां सम्बन्धाभावमुपपाद्य सम्बन्धाभावे पुनर्हेत्वन्तरमप्याहुरुग्रप्रताप इति, उग्रो भक्तातिरिक्तानामसह्यः प्रतापस्तेजो यस्य सः, तेनान्येषामैकक्ष्यमपि दुर्लभं कुतः सम्बन्धोपीत्यर्थ, ननु यद्यपि भक्तातिरिक्तेषु तेजसोसह्यत्वमुक्तं, तथापि तेजःस्वभावात् कदाचिद्भक्तेष्वप्यसह्यत्वं भविष्यतीत्याशङ्कानिरासायाग्रिमनामाहुर्वाक्सीधुपूरिताशेषसेवक इति, एवं सेवकेषु वचनामृतपूरणेन सर्वतापनिवृत्तिरुक्ता, श्रीभागवतार्थनिरूपकवाक्सीधुना वचनामृतेन बाह्याभ्यन्तरभेदेन पूरिता अशेषाः सर्वे सेवका येन सः, वचनानाम्पीयूषत्वोक्त्या सर्वेन्द्रियसुखजनकत्वं सर्वतापनिवर्तकत्वं च ज्ञापितमिति भक्तानां पूर्वोक्ततेजोसह्यत्वाशङ्कानिरासायोक्तं वाक्सीधुपूरिताशेषसेवक इति ॥ १८ ॥

श्रीभागवतपीयूषसमुद्रमथनक्षमः ॥
तत्सारभूतरसस्त्रीभावपूरितविग्रहः ॥१९॥

वचनामृतेनापि सेवकानां सर्वतापनिवारकत्वज्ञापनायाहुः श्रीभागवतपीयूषसमुद्रमथनक्षम इति, श्रीभागवतरूपो यः पीयूषसमु-

द्रोभूतसमुद्रस्तस्य मथने तत्सारोद्धारार्थमालोडने क्षमः समर्थ इत्यर्थः, 'तेन सेवकाना श्रीभागवतार्थाजानजनिततापोपि तदर्थप्रति पादकसुबोधिन्यादिरूपवचनामृतैरपि निवार्यत इतिज्ञापनायोक्त श्रीभागवतपीयूषसमुद्रमथनक्षम इति ।

पूर्वनाम्नि श्रीभाग तस्याम्रुतसमुद्रत्वमुपपाद्याचार्याणान्तन्मथनकर्तृत्वमुपपाद्याग्रिमनाम्नि तत्सारोद्धारकर्तृत्वज्ञापनायाग्रिमन्नामाहुस्तत्सारभूतरासस्त्रीभावपूरितविग्रह इति, अत्रपूरितविग्रहत्वोक्तेरयमाशयः, यथा क्षीरसमुद्रमथने क्षीरस्यामृतापक्षया न्यूनत्वादमृतस्यैव सारभूतत्वमुचितमत्र तु समुद्रस्यैवामृतमयत्वाल्लोके तत उत्कृष्टपदार्थस्याभावादेतद्भावादतिरिक्तस्य कस्यापि सारत्वन्न सम्भवतीति मुक्त्यपेक्षयाप्यधिकस्य रासस्त्रीभावस्य सारत्वमुक्तं, यथा क्षीरसमुद्रोद्धृतसारस्य भोक्तारो देवा एव नान्ये तथैवैतदुद्धृतसारस्य भोक्तृत्वमाचार्याणामेव नान्यस्यापीतिज्ञापनायोक्तं तत्सारभूतरासस्त्रीत्यादि, अत्र विग्रहस्य भावपूरितत्वकथने यथा देवानामन्तरेवामृतपूर्तिर्न बाह्यतः तथा न प्रकृते, आचार्याणा तु बाह्याभ्यन्तरभेदेनैतद्भावपूरितत्वमेव नान्यभावसम्बन्धोपीतिज्ञापनायोक्तं रासस्त्रीभावपूरितविग्रह इति ॥ १६ ॥

सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिदः ॥
रासलीलैकतात्पर्यः कृपयैतत्कथाप्रदः ॥१७॥

नन्वाचार्याणां विग्रहस्य बाह्याभ्यन्तरभेदेन कथमेतद्भावपूर्णत्वमेवेत्याशङ्कानिरासायाहुः **सान्निध्यमात्रदत्तश्रीकृष्णप्रेमेति**, सान्निध्यमात्रेणैव दत्तं श्रीकृष्णप्रेम येन सः, यदि बाह्याभ्यन्तरभेदेनैतद्रसपूर्णत्वन्न स्यात्तदा भक्तानां स्वसान्निध्यमात्रेणैव श्रीकृष्णप्रेमदानन्न स्याद्यो येन पदार्थेन पूर्णः स एव तद्दातुं शक्नोति न त्वपूर्णोपि, प्रेमदाने श्रीकृष्णपदोपादानाद्भक्तसहितलीलाविशिष्टे फलात्मके प्रेमदानं सूचितम् ।

ननु श्रीकृष्ण एव प्रेमदाने को हेतुरित्याशङ्कानिरासाय तद्धेतुभूतनामाहुर्विमुक्तिद इति, विशिष्टां पुष्टिमार्गीयां साक्षाद्भगवत्सम्बन्धरूपा मुक्तिं ददातीति विमुक्तिदः,पुष्टिमार्गे भगवत्सम्बन्धस्य मुक्तित्वकथनस्यायमभिप्रायः, यथा मर्यादामार्गे सायुज्यादिमुक्तेरेव फलत्वं तथास्मिन्मार्गे भगवत्सम्बन्धस्यैव फलत्वं न सायुज्यादेरितिज्ञापनाय मुक्तित्वकथनं, यथा मुक्तानां पुनरन्यावस्थाभावस्तथैव पुष्टिमार्गीयफलप्राप्तानामपि पुनरवस्थान्तराभावज्ञापनार्थमपि मुक्तित्वकथनम् ।

एवं स्वमार्गीयफलस्य सर्वमार्गीयफलाधिक्यं तस्य च सर्वप्रमाणसिद्धत्वज्ञापनायामिमन्नामाहुः **रासलीलैकतात्पर्य** इति, रासलीलायामेव एकं केवलं तात्पर्यं यस्य सः, एतेन साक्षात्स्वरूपसम्बन्धस्यैव सर्वाधिकफलत्वं ज्ञापितं, यदि मुक्तेरेवैतदपेक्षयाधिकफलत्वं भवेत्तदा भगवानेतन्मार्गीयफलानुभवं कारयित्वा

पश्चान्मुक्तिं दद्यात् यन्मुक्तिं दत्त्वा तदानन्दानुभवं कारयित्वैतन्मार्गीय-फलं दत्तवांस्तस्मादेतस्यैव मुख्यफलत्वं नान्यस्य तस्मादेतत्फल निरूपणादेवास्य फलप्रकरणत्वं न तु प्रकारान्तरेणापि, एतत्सर्वं हृदि कृत्वाचार्यैरेतस्यैव फलत्वं निरूपितं नान्यस्येतिज्ञापनायोक्तं **रास-लीलैकतात्पर्य** इति ।

एवम्पूर्वोक्तफलस्यैव सर्वाधिकफलत्वमुपपाद्य प्रकारान्तरेणापि फलत्वप्रतिपादकत्वहेतुभूतनामान्तरमाहु कृपयैतत्कथाप्रद इति, **कृपयैतत्कथा** रासलीलासम्बन्धिनी ता प्रकर्षेण ददाति तदर्थानुभवं कारयतीति तथेत्यर्थः, यद्यपि कथायाः शब्दात्मकत्वात् तस्याः कथन मेव दान तथापि तद्दाने प्रकर्षत्वकथनात् तत्र च कृपाया एव हेतुत्व-कथनाद्यत्र तत्कृपाव्यतिरेकेण कथनं तत्र कथनमेव न दानं, यत्र कृपापूर्वकं कथनं तत्रैव दानं, दाने प्रशब्दोपादानात्तदर्थानुभवत्व मपि ज्ञापितमित्यत आहु कृपयैतत्कथाप्रद इति ॥१७॥

**विरहानुभवैकार्थसर्वत्यागोपदेशकः**
**भक्त्याचारोपदेष्टा च कर्ममार्गप्रवर्तकः ॥१८॥**

यद्यपि रासलीलाप्रदत्वकथनेनैव तत्प्रतिपाद्योभयरसानुभवस्य श्रो-तॄणां तदीयत्वेन तद्रसभावनया रसानुभवः सिध्यति तथापि केवले विप्र योगभावो भगवदन्तररहित स्वतन्त्रतया तत्तदवस्थाभेदेन विकलत्वमस्या-

स्यम्मूर्च्छा पुनर्जागरणन्तादात्म्येन यत्किञ्चित्स्वास्थ्यं प्रलापइत्याद्यव-स्थाभेदेनानुभवसिद्धयर्थकथनत्वज्ञापनायोक्तं **विरहानुभवैकार्थसर्वत्या-गोपदेशक** इति, **विरहानुभव एव एकः** केवलोर्थः प्रयोजनं तन्निमित्तको यः **सर्वत्यागस्तदुपदेशक** इत्यर्थः, यद्यपि रासलीलायामपि विप्रयोगभावोस्त्येव, तथापि तत्र "कस्याश्चित् पूतनायन्त्या" इति लीलाभिनिवेशभावकथनात् तृतीयाध्यायेप्याद्यश्लोकेनौचित्यप्रतिपादनात् द्वितीयश्लोक उपालम्भप्रार्थनादिभावनिरूपणाच्च केवलत्वं, उपदेशककर्तृत्वकथनेन तदुपदेशप्रकारस्थितावेतद्भावो भवतीत्यपि ज्ञापनायोपदेशक इत्युक्तम्।

एवं विरहानुभवे हेतुत्यागोपदेशककर्तृत्वमुक्त्वा भक्तिमार्गस्थैर्यार्थम्भक्तयाचारोपदेशककर्तृत्वमाहुर्**भक्तयाचारोपदेष्टा चेति**, भक्तिमार्गीयो य **आचार** आचरणमन्याश्रयराहित्येन निरुपधिभावेन फलत्वज्ञापनपूर्वकं सेवाकरणं तदुपदेशकर्तेत्यर्थः, स्वस्यापि तथाकर्तृत्वज्ञापनाय चकारः।

एवम्भक्तयाचारोपदेशकर्तृत्वमुक्त्वाग्रे कर्ममार्गप्रवर्तकत्वकथनस्यायमाशयः, यदि केवलभक्तिमार्गोपदेशं कृत्वा स्वीयेषु वर्णाश्रमाचारधर्मान्न प्रवर्त्तयेत्तदा बहिर्मुखानां स्वप्रवर्तितभक्तिमार्गे दोषारोपात् स्वमार्गस्यापि दोषारोपहेतुत्वमापद्येतेति निर्दोषत्वज्ञापनार्थमाहुः **कर्ममार्गप्रवर्तक** इति ॥१८॥

यागादौ भक्तिमार्गैकसाधनत्वोपदेशकः॥
पूर्णानन्दः पूर्णकामो वाक्पतिर्विबुधेश्वरः॥ १९॥

एवं कर्ममार्गप्रवर्तकत्वे हेतुमुक्त्वा स्वस्यापि यागकरणं स्वीयाना-म्भक्तिमार्गापराधाभावाशिक्षार्थमेवान्यार्थमितिज्ञापनायोक्तं यागादौ भक्तिमार्गैकसाधनत्वोपदेशक इति, याग आदिर्यस्य दानादेः स यागादिस्तस्मिन् यागादौ भक्तिमार्गस्य एकं मुख्यं यत्साधनत्वं तदुपदेशकः, ननु स्वस्य यागकरणेन कथम्भक्तिमार्गापराधनिवृत्तिरिति-तिचेत्, सत्यं, भक्तिमार्गेऽस्त्यपराधद्वयं देवतान्तरसम्बन्धो भक्तिमार्गीय-फलाभावश्च, आचार्यैः स्वय यागकरणेन स्वीयानामपराधद्वयं निवारितं, यतो देवतायागो भगवद्विभूतित्वेनैव कृतो न तु स्वतन्त्रदेवतात्वेन, अत एव देवतानां स्वातन्त्र्याभावपूर्वकं भगवद्विभूतित्वेन यजनं कर्तुं युधिष्ठिरेणैव प्रभुं प्रति विज्ञापितं "वक्ष्ये विभूतीर्भवतस्तत्सम्पादय नः प्रभो" इति नात्र विचारणीयं किंचित्, तस्यापि फलत्वेन भक्तेरेवोद्देशः कृतः न तु स्वर्गादिरपीत्येतावती शिक्षा तवैर्यैस्तद्यागकरणेनैव ज्ञाता नान्यथेतिज्ञापनायोक्तं यागादौ भक्तिमार्गेत्यादि।

यद्यपि स्वीयशिक्षार्थमेव यागकरणं तथापि यागस्य स्वर्गफल-कत्वेन श्रुतौ प्रतिपादनादाचार्याणामपि स्वर्गसुखाकाङ्क्षा कामि-तफलान्तराकाङ्क्षा वा भविष्यतीति कस्यचिद्बहिर्मुखस्याशङ्कानिरासा-याभिमन्नामद्वयमाहुः पूर्णानन्दः पूर्णकाम इति, पूर्णः अगणित

आनन्दो यस्य सः, तेन "तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" तिश्रुत्या स्वर्गादिलोकसुखस्यापि भगवदानन्दलेशत्वकथनादाचार्याणाम्भगवदानन्दपूर्णत्वेन स्वर्गादिलोकसुखाकाङ्क्षासम्भावनापि न सम्भवतीति कथम्बहिर्मुखाशङ्कितसम्भावनापीतिज्ञापनायोक्तम्पूर्णानन्द इति।

द्वितीयाशङ्कापरिहाराय द्वितीयन्नामाहुः **पूर्णकाम** इति, **पूर्णा** लौकिककामितसुखापेक्षयाप्यगणितसुखपूर्णा अलौकिकाः **कामा** यस्य सः, अनेन द्वितीयशङ्काया अपि निरासोप्युक्त इति सर्वमनवद्यम्।

एवम्पूर्वनाम्न्याचार्याणाम्पूर्णकामत्वमुक्त्वातः परं यत्रान्येषामपि कामपूरकत्वमस्ति तत्र स्वस्य पूर्णकामत्वे किं वक्तव्यमितिज्ञापनायाग्रिमन्नामाहुर्वाक्पतिरिति, वाक्पतित्वकथनेनाचार्याणाम्भगवन्मुखारविन्दाधिष्ठातृत्वाग्निरूपत्वकथनेन च यागहविर्भोक्तृत्वेन यत्रान्येषां कामपूरकत्वन्तत्र स्वस्य पूर्णकामत्वे किं वक्तव्यमित्येतज्ज्ञापनार्थमुक्तं **वाक्पतिरिति**।

एवं कर्ममार्गीयाणां कामपूरकत्वमुपपाद्य भगवज्ज्ञानमार्गीयाणामपि मनोरथपूरकत्वोपपादनायाग्रिमन्नामाहुर्विबुधेश्वर इति, **विशेषेण बुधा** ज्ञानिनः, ज्ञाने विशेषो भक्तिमार्गीयत्वं, तेषामीश्वरः फलदाता॥ १९॥

कृष्णनामसहस्रस्य वक्ता भक्तपरायणः ॥
भक्त्याचारोपदेशार्थनानावाक्यनिरूपकः ॥२०॥

एवम्भक्तिमार्गीयज्ञानफलदातृत्वमुक्त्वा तत्फलदानप्रकारज्ञापनायाग्रिमन्नामाहु कृष्णनामसहस्रस्य वक्तेति, कृष्णस्य फलरूपस्य यन्नामसहस्रं तस्य वक्ता प्रकाशकः, यद्यपि भगवत्सहस्रनामकर्तृत्व वैशम्पायनादिष्वपि वर्त्तते तथापि तेषाम्पुराणान्तरप्रसिद्धनाम्नामेव तत्कर्तृत्वन्न तु फलात्मकस्य, तत्रापि श्रीभागवतोक्तदशलीलाविशिष्टस्य तत्तल्लीलाविशिष्टनामप्रतिपादकत्वमाचार्याणामेव नान्येषामप्यस्तीतिज्ञापनायोक्त कृष्णनामसहस्रस्य वक्तेति ।

अत. परम्फलात्मकस्य तत्रापि दशलीलाविशिष्टस्य नामकथनस्यावश्यकत्वज्ञापनायाग्रिमन्नामाहुर्भक्तपरायण इति, भक्तेषु परायणस्तात्पर्यवान्, यदि फलात्मकस्य दशलीलाविशिष्टस्य नाम्नाम्प्राकट्यमाचार्यैर्न क्रियेत तदा भक्ताना श्रीभागवतार्थज्ञानाभावात्तत्प्रतिपादितफल न सिध्येदित्याचार्याणाम्भक्तपरायणत्वमपि न सिध्येदित्येतच्छङ्कानिरासायोक्तम्भक्तपरायण इति ।

एवम्पूर्वोक्तप्रकारेण भक्तपरायणत्वन्निरूप्य स्वप्रकटितभक्तिमार्गीयाचारज्ञापकमग्रिमन्नामाहुर्भक्त्याचारोपदेशार्थनानावाक्यनिरूपक इति, भक्तिमार्गीयो य आचार आचरणं तदुपदेशार्थं

नानाविधानि यानि वाक्यानि नेवरत्नभक्तिवर्धिन्यादीनि तेषां निरूपकस्तदर्थविबोधक इत्यर्थः, यद्यपि पूर्वम्भक्तयाचारोपदेष्टृत्व-मात्रमुक्तन्तथाप्यधुना तद्वाक्यार्थमेव वाक्यनिरूपणपूर्वकमुच्यत इति न पौनरुक्तदोषः॥ २०॥

स्वार्थोज्झिताखिलप्राणप्रियस्तादृशवेष्टितः॥
स्वदासार्थकृताशेषसाधनः सर्वशक्तिधृक् ॥२१॥

एवं स्ववाक्योपदेशार्थावगमजनितानन्दभक्तकृतिज्ञापकनामाहु. स्वार्थोज्झिताखिलप्राणप्रिय इति, स्वार्थोज्झिताखिलप्राणादपि प्रिय, स्वार्थमेव तज्ज्ञाचार्यसेवार्थमेवोज्झिनमाखिलं सेवाविरोधि यै तेषां प्राणादपि प्रियः, अथवा भक्ते. स्वार्थं स्वकृतार्थतासिद्ध्यर्थ मुज्झितमखिलं भक्तिमार्गविरोधि यैः तेषां प्राणप्रियः।

एवम्पूर्वनाम्नि भक्तानां प्राणप्रियत्वमुक्त्वा प्राणप्रियज्ञापक-क्रियाज्ञापकनामाहुस्तादृशवेष्टित इति, तादृशैः स्वार्थोज्झिताखिलैः वेष्टितः सेवार्थे।

ननु निरन्तरं सेवाकरणे सेवासक्तया कदाचित्कर्मकाललोपदोष. प्रसज्येतेति तन्निराकरणायाहुः स्वदासार्थकृताशेपसाधन इति, स्वदासार्थमेव कृतान्यशेषाणि सर्वाणि साधनानि येन सः, एतेन कर्मकाललोपदोषपरिहारकत्वमुक्तं, अथवा ननु यत्सेवार्थं तदीयाः

सर्वे स्वेक्रुवा तदाश्रिता एव तिष्ठन्ति तादृशमहानुभावानाम्मर्यादा-मार्गोक्तसाधनकरणे किम्प्रयोजनमित्याशङ्कानिरासायाप्युक्तं **स्वदा-सार्येत्यादि** ।

ननु स्वकृतसाधनेन व्यधिकरणत्वात् कथन्दासकृतदोषनिवृत्ति-रित्याशङ्कापरिहारायामिमन्नामाहुः **सर्वशक्तिधृगिति**, **सर्वाः** अलौकिक्यः शक्तयः तासु धृष्णोति प्रगल्भते स्वसामर्थ्यप्राकट्यं करोतीति सर्वशक्तिधृक्, अत्र शक्तिषु प्रागल्भ्यकथनेन स्वसाधन-करणेन भक्तानां कदाचित्साधनलोपदोषपरिहारसामर्थ्यमुक्तमिति न पूर्वपक्षावसर इति सर्वमनवद्यम् ॥२१॥

**भुवि भक्तिप्रचारैककृते स्वान्वयकृत्पिता ॥**
**स्ववंशे स्थापिताशेषस्वमाहात्म्यः स्मयापहः॥२२॥**

एवम्भगवदाज्ञया भक्तिमार्गप्राकट्यार्थं स्वयं प्रकटो भूत्वा स्वप्रकटितभक्तिमार्गस्वीयभक्तेषु स्वोपदेशस्वाचरणादिना स्वप्राकट्य-समये तेषु सर्वं सम्यग् ज्ञापयित्वापि भगवता भक्तिमार्गाङ्गीकृतजीवेषु भक्तिमार्गप्रवृत्तिः स्ववंशव्यतिरेकेण न भवतीति स्ववंशकरणमिति-ज्ञापनायामिमन्नामाहुर्भुवि भक्तिप्रचारैककृते स्वान्वयकृदिति, **भुवि भक्तिप्रचारैककृते स्वान्वयकृत् स्ववंशकर्ता**, अत्रान्वयपदस्य पुत्रपरत्वं ज्ञेयं, एकपदेन मुख्यत्वं ज्ञापितम् ।

वंशे प्रकारान्तरनिराकरणपूर्वकं केवलमौरसत्वज्ञापनायोक्तं पितेति ।

ननु पुत्रत्वेपि स्वतुल्यत्वं यदि वंशे न स्यात् तदा कथं स्वप्रवर्तितमार्गप्रवर्तकत्वं भवेदित्याशङ्कानिरासायाहुः **स्ववंशे स्थापिताशेषस्वमाहात्म्य** इति, स्ववंश स्थापितं अशेषं सम्पूर्णं माहात्म्यं येन स', एतेन पूर्वकृताशङ्कानिरासो ज्ञापितः।

ननु सर्वात्मना सम्पूर्णस्य माहात्म्यस्य स्थापन आश्चर्यत्वमाशङ्कय तन्निरासायाहुः **स्मयापह** इति. स्मयं आश्चर्यमपहन्तीति दूरीकरोतीति **स्मयापहः** ॥२२॥

पतिव्रतापतिः पारलौकिकैहिकदानकृत् ॥
निगूढहृदयोनन्यभक्तेषु ज्ञापिताशयः ॥ २३ ॥

ननु सिद्धवत्कारेण स्मयापहत्वकथने को हेतुरित्याशङ्कानिरासाय हेतुनिरूपकनामाहुः **पतिव्रतापतिरि**ति, पत्युर्व्रतमिव नियम इव व्रतं नियमो यस्याः सा पतिव्रता तस्याः पतिः, अनेनाचार्येषु यावन्तो धर्मा अलौकिकास्तावद्धर्मवत्त्वमत्रापि ज्ञापितं भवति, अन्यथा तत्पतित्वमेव नोपपद्येत, अत्रायमाशयः, वंशे यत्तारतम्यं दृष्टं तद्बीजक्षेत्रतारतम्यहेतुकमिति, अत्र त्वाचार्याणां साक्षात्पुरुषोत्तमास्यत्वं सोपपत्तिपूर्वकं पूर्वं निरूपितमेतत्परिग्रहेपि यदि तत्तुल्यत्वं न स्यात्तदा-

बीजक्षेत्रतारतम्याद्विशेपि तारतम्यमेव भवेदत्र तूभयोः परमानन्द-रूपत्वेन साम्यात् तस्माद्भूतवंशस्यापि तत्तुल्यत्वज्ञापनेन पूर्वोक्ता शङ्कानिरास उक्तो भवतीति सर्वमनवद्यं, अदृष्टस्य जीवधर्मत्वात तत्कृताशङ्कासम्भवोपि न भवतीति सर्वमनवद्यम् ।

एवं स्ववंशस्य सोपपत्तिकं स्वसाम्यमुपपाद्य स्वीयानामैहिका-मुष्मिकफलदानसामर्थ्यमाहुः पारलौकिकैहिकदानकृदिति, स्व-मार्गीयं पारलौकिकं भगवत्सम्बन्धरूपमैहिकं तत्सेवार्थमेव स्त्रीपुत्र-धनादिरूपं तद्दानकृत्, यद्यप्यदृष्टादिना कस्यचित्तीर्थादिमरणेन पारलौकिकफलमनुमीयते पतिपुत्रादिरूपमैहिकमपि. दृश्यते तथापि पूर्वोक्तप्रकारकपारलौकिकैहिकदानकृदिति ।

यद्यपि पूर्वनाम्नि पारलौकिकैहिकदानकरणे न सन्देहस्तथापि कदा केन प्रकारेण दास्यतीतिजिज्ञासायामाहुर्निगूढहृदय इति, नितरां गूढं ईश्वरत्वेन ज्ञातुमशक्यं हृदयं यस्य सः, तेन फलदाने न सन्देहः परन्त्वीश्वरेच्छाया अनियम्यत्वात्कालविशेषनियमस्या-शक्यत्वज्ञापनायोक्तन्निगूढहृदय इति ।

ननु सर्वेषामियमेव व्यवस्था अथवा स्वेच्छामपि केषु-चिज् ज्ञापयतीतिसन्देहनिवृत्त्यर्थमग्रिमनामाहुरनन्यभक्तेषु ज्ञापि-ताशय इति, अनन्या अन्तरङ्गा, भक्ताः पद्मनाभ-दासप्रभृतयो विरलास्तेपु ज्ञापितः आशय. अन्तःकरणं येन सः,

तेन य ज्ञापयति स एव समयविशेषं जानाति न तु सर्वेषा ज्ञानयोग्य-तेतिज्ञापनायोक्तमनन्यभक्तोष्वित्यादि ॥२३॥

उपासनादिमार्गातिमुग्धमोहनिवारकः ॥
भक्तिमार्गो सर्वमार्गवैलक्षण्यानुभूतिकृत् ॥२४॥

एवं स्वकीयेषु फलाव्यभिचारित्वमुपपाद्य कदाचिद्धु ससर्गात् स्वीयानामपि कृतिसाम्यादज्ञानादुपासनादिमार्गप्रवृत्तानामज्ञाननिवृत्तिपूर्वकरक्षाकरणज्ञापकमग्रिमन्नामाहुरुपासनादिमार्गातिमुग्धमोहनिवारक इति, उपासनादिमार्गाः पूजाज्ञानयोगादयस्तत्र भक्तिमार्गाभिमानेन येतिमुग्धा अत्यन्ताज्ञानिनस्तेषा भक्तिमार्गनिरूपणेन मोहस्य अज्ञानस्य निवारकः।

ननु भक्तिमार्गनिरूपणमात्रेणैव कथमज्ञाननिवृत्तिरित्याशङ्का-निरासायाग्रिमन्नामाहुर्भक्तिमार्गो सर्वमार्गवैलक्षण्यानुभूतिकृदिति, अत्र निरूपणेन कथनमात्रन्न विवक्षित किन्तु कथनस्यानुभवपर्यवसायित्वेनाज्ञाननिवर्तकत्वज्ञापनायोक्तम्भक्तिमार्गे सर्वमार्गेत्यादि, वैलक्षण्यं तूपासनामार्गोपास्यदेवताया मन्त्राधीनत्वाद्विभूतित्वेन साक्षात्पुरुषोत्तमत्वाभावाद्भक्तिमार्गे सेव्यस्य केवलभक्त्यधीनत्वेन पुरुषोत्तमत्वाद्यथोपासनामार्गाद्भक्तिमार्गे वैलक्षण्य सोपपत्तिकमनुभूत भवति तथा कर्तृत्वर्थ ॥२४॥

पृथक्शरणमार्गोपदेष्टा श्रीकृष्णहार्दवित् ॥
प्रतिक्षणनिकुञ्जस्थलीलारससुपूरितः ॥ २५ ॥

ननूपासनादिमार्गाणाम्पुरुषोत्तमापर्यवसायित्वेनानुभवपर्यवसायि-भक्तिमार्गनिरूपणेन तेषु मार्गेषु भक्तिमार्गज्ञानरूपं यदज्ञानं स्वकीयेषु तन्निवृत्तिमुक्त्वा शरणमार्गस्य पुरुषोत्तमपर्यवसायित्वेन भक्तिमार्गत्व-म्भविष्यतीत्याशङ्कानिरासायाग्रिमन्नामाहुः पृथक्शरणमार्गोपदेष्टेति, भक्तिमार्गात् पृथग्भिन्नो यः शरणमार्गस्तस्योपदेष्टा 'न्यासादेशोऽन्वि'-त्यादिना स्वीयेषूपदेशकर्ता, यद्यपि भक्तिमार्गीयोपि शरणमार्गोस्ति "तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहं गोपाये स्वात्मयोगेन सोयं मे व्रत [1]आसित" इति भगवतैवोक्तत्वाद्भक्तिमार्गीयशरणस्याग्रे स्वरूपानन्दानुभवफलपर्यवसायित्वात्तच्छरणस्य भक्तिमार्गीयत्वं यथा तथा मर्यादामार्गीयोपि शरणमार्गो भक्तिमार्गीयशरणमार्गाद्भिन्नोस्ति मर्यादामार्गीयफलसाधकस्तयोरन्तरतस्यज्ञातृत्वमाचार्याणामेवेतिज्ञाप-नायापि तन्नामोक्तं पृथक्शरणमार्गोपदेष्टेति, पृथक्पदेन भगवता गीतासु पार्थं प्रति "सर्वधर्मान् परित्यज्ये"त्याद्युपादिष्टस्य शरणमार्गस्य मर्यादामार्गीयत्वमेव न शुद्धपुष्टिमार्गीयत्वं, उपदिष्टशरण-मार्गस्य "नष्टो मोह" इति सर्वसन्देहनिवृत्तिपूर्वकं "करिष्ये वचन-न्तवे"ति भगवदधीनत्वस्यैव फलत्वनिर्देशात्तस्य मुक्तिपर्यवसायित्वेन

[1]. आहित इत्यपि पाठः।

मर्यादामार्गीयत्वम् ।

ननु शरणमार्गस्य पुरुषोत्तमपर्यवसायित्वेपि भगवदुपदिष्टत्वेपि "न्यासादेशे"त्वित्यनेन भक्तिमार्गभिन्नत्वनिरूपणे को हेतुरित्याशङ्कानिरासायाहुः श्रीकृष्णहार्दविदिति, कृष्णस्य फलात्मकस्य हार्दमभिप्रायं वेत्तीति श्रीकृष्णहार्दवित्, शरणमार्गस्य भक्तित्वं चेत्स्यात्तर्हि भक्तेः साक्षात्स्वरूपसम्बन्धफलकत्ववत् शरणमार्गस्यापि तत्फलकत्वेनैवोपदेशः स्यात् न तु पापनिवृत्तिफलकत्वेन प्रायश्चित्तादिवत्, किञ्च भगवान् हि यथाधिकारं साधनमुपदिशति, अर्जुनस्य मर्यादापुष्ट्याङ्गीकृतत्वादुभयांशत्वं ज्ञात्वोभयसमाधानार्थं शरणगमनस्य पापनाशसाधनत्वेन समर्यादांशत्वं पापफलशोकनिवारणे साधनान्तरमनुक्त्वा स्वस्यैव साधनत्वेन पुष्ट्यंशत्वमपि ज्ञापयित्वा शरणमार्गोपदेशस्य केवलं स्वाधीनत्वेन स्ववाक्यकरणस्यैव फलत्वं ज्ञापयित्वा युद्धकरणे योजितवान् न तु साक्षात्स्वरूपसम्बन्धं कारितवान, अत एवार्जुनेनोक्तं "करिष्ये वचनं तवे"ति, एतावद्भगवदभिप्रायज्ञानमाचार्याणामेव नान्यस्य सम्भवतीतिज्ञापनायोक्तं श्रीकृष्णहार्दविदिति।

एवं शरणोपदेशे भगवदभिप्रायं ज्ञात्वा पुरुषोत्तमस्य पुष्टिमार्गीयफललीलायामेव हृदयं नान्यत्रापीतिज्ञापनाय स्वयं साक्षात्पुष्टिलीलारसाभिनिविष्टो जात इति ज्ञापनायाभिमन्नामाहुः प्रतिक्षणनिकुञ्जस्थलीलारसपूरित इति, प्रतिक्षणं निकुञ्जस्थस्य या लीला

तस्यां यो रसस्तेन सुष्ठु बाह्याभ्यन्तरभेदेन पूरितः पूर्णः ॥२५॥

तत्कथाक्षिप्तचित्तस्तद्विस्मृतान्यो व्रजप्रियः ।

प्रियव्रजस्थितिः पुष्टिलीलाकर्ता रहःप्रियः ॥२६॥

ननु रसपूर्णतायां आन्तरधर्मत्वात् कदाचिद्भक्तानां ज्ञानविषयत्वं न भविष्यतीत्याशङ्क्य तद्धर्मज्ञापकमभिमन्नामाहुस्तत्कथाक्षिप्तचित्त इति, तल्लीलारसकथायामेवासमन्तात् क्षिप्तं प्रेरितं चित्तं येन सः, एतेन निरन्तरं तत्कथाकथनेन भक्तानामपि तद्रसपूरितत्वाज्ञानं सम्भवतीतिपूर्वपक्षिकृता शङ्का परिहृता वेदितव्या, अथवा प्रतिक्षण-
[illegible]
[illegible]
रसलीलापूरितत्वं तदा बाह्याभ्यन्तरभेदेन तद्रसपूरितत्वमेव यदा पुनर्निकुञ्जस्थविप्रयोगलीलारससुपूरितत्वं यथा गीतगोविन्दे 'नव विरह' इत्यादि तदा स्थातुमशक्यत्वात्तत्कथाक्षिप्तचित्ततया काल-निर्वाहत्वज्ञापनायाप्युक्तं तत्कथाक्षिप्तचित्त इति, एतेनाचार्याणा-मुभयरससुपूरितत्वेन सदा पूर्णस्वरूपानन्दरसपूरितत्वं ज्ञापितं भवति, अथवा तत्कथाकथनार्थमेवाक्षिप्तं व्याकुलं चित्तं यस्य सः ।

ननु निरन्तरमेतद्रसकथाया एव कथने को हेतुरित्याशङ्का-निरासायाभिमन्नामाहुस्तद्विस्मृतान्य इति, तद्रसकथयैव विस्मृत-मन्यत्तदतिरिक्तं कथाननुगुणं सर्वं येन सः ।

ननु कथाननुगुणाप्रियत्वे कथानुगुणस्यैव च प्रियत्वे किन्नियामकमित्याशङ्कानिरासायाहुर्व्रजप्रिय इति,व्रजः प्रियो यस्य स व्रजप्रियः, व्रजप्रियत्वोक्त्या व्रजस्य कथानुगुणत्वात्तत्सम्बन्धिपदार्थमात्रस्य सर्वस्यैव प्रियत्वमुक्तमिति सुष्ठूक्तं कथाननुगुणस्याप्रियत्वमिति।

एवम्पूर्वनाम्नि व्रजप्रियत्वमुक्त्वा व्रजस्य प्रियत्वज्ञापनायामिमं नामाहुः प्रियव्रजस्थितिरिति, प्रिया व्रजस्थितिर्यस्य सः, यदि व्रजस्य प्रियत्वं न स्यात् तदा तत्र स्थितिन्न कुर्यात्, व्रजे स्थितिकथनेनाचार्याणां व्रजप्रियत्वमत्यन्तं ज्ञापितं भवति।

ननु व्रजप्रियत्वेन तत्र स्थितिकरणे को हेतुरित्याशङ्कापरिहारायाहुः पुष्टिलीलाकर्तेति, अत्रायमाशयः, भगवानपि पुष्टिलीलां रासादिलीलां व्रज एव कृतवानिति ज्ञात्वा स्वयमपि स्वीयेषु तल्लीलाप्रकारज्ञापनाय तल्लीलानुकरणं कृतवानितिज्ञापनायोक्तं पुष्टिलीलाकर्तेति।

यद्यपि स्वीयानां ज्ञापनायानुकरणेन रसानुभवं कारितवांस्तथापि स्वयमेतल्लीलारसानुभवमेकान्त एव करोतीतिज्ञापनायोक्तं रहःप्रिय इति, रहःएकान्तमेव प्रियं यस्य सः ॥२६॥

भक्तेच्छापूरकः सर्वाज्ञातलीलोतिमोहनः ॥
सर्वासक्तो भक्तमात्रासक्तः पतितपावनः ॥ २७ ॥

यद्यपि स्वयमेकान्तमेव स्वमनोरथपूर्तिप्रकारेण लीलामनुभवति तथापि स्वान्तरङ्गभक्तेषु पुष्टिलीलाज्ञानार्ति दृष्ट्वा तत्कथनेन

तद्विषयिणीमिच्छार्तिं पूरयतीतिज्ञापनायोक्तं भक्तेच्छापूरक इति।

ननु यथा तदार्तिदर्शनेन तदार्तिं शमयति तथा कृपया कदाचित् स्वमनोरथपूर्तिप्रकारकथनमपि भक्तेषु भविष्यतीत्याशङ्का-निरासायाहुः सर्वाज्ञातलील इति, सर्वैर्भक्तैरप्यज्ञाता लीला यस्य सः, तेन स्वानुभवप्रकारातिरिक्तप्रकारमेव बोधयति न तु साक्षात्स्वानु-भवप्रकारमपीति ज्ञापितम्भवति।

ननु दैन्येष्वप्यतिप्रचुरभाग्ययोगेन कदाचिदाचार्याः केन प्रकारेण भगवद्रसमनुभवन्तीतिमनोरथं दृष्ट्वा तन्मनोरथपूरकत्वज्ञापना-याग्रिमनामाहुरार्तिमोहन इति, अस्यायमाशयः, यद्यपि भक्तमनोरथं जानन्ति तथापि तेषु कथनयोग्यां भगवल्लीलां तेन प्रकारेण कथ-यन्ति येन तत्प्रकारकथश्रवणजनितरसावेशेन तथा मुग्धा भवन्ति येन सर्वमनोरथपूर्तिर्भवतीतिज्ञापनायोक्तमार्तिमोहन इति।

ननु पुष्टिमार्गीयभक्तेष्वेतल्लीलाज्ञानसम्पादकत्वेऽन्येष्वसम्पादकत्वे को हेतुरित्याशङ्कानिरासायाग्रिमनामाहुः सर्वासक्त इति, सर्वेषु पुष्टिमार्गीयातिरिक्तेषु असक्त उपेक्षायुक्तः, अतस्तेष्वज्ञापनमिति गुप्तमुक्तं सर्वासक्त इति।

भक्तिमार्गीयेष्वेतज्ज्ञापनस्यावश्यकत्वज्ञापनायाग्रिमनामाहुर्भक्त-मात्रासक्त इति, पुष्टिमार्गीयभक्तेष्वेवासक्तः कृपायुक्तः, अत्र च मात्रपदो-पादानेन यथा भक्तमात्रेष्वेवासक्तिस्तथा तदितरमात्रेष्वनासक्तिरपीति ज्ञापितम्।

यद्यपि पूर्वनाम्नि भक्तमात्रासक्तत्वाविरूपितं तथापि प्रकारान्तरेणापि विशेषतो भक्तमात्रासक्तत्वनिरूपणायाग्रिमनामाहुः **पतितपावन** इति, अत्र पतितपावनत्वकथनस्यायमाशयः, लोकप्रसिद्धपातकानां भक्तिमार्गीयेषु सर्वात्मनासम्भावितत्वेपि यत्पतितपावनत्वकथनं तदेतन्मार्गीयपतितपावनपरत्वमिति ज्ञेयं, नन्वेतन्मार्गीयं किं पातकमितिचेदुच्यते यथा मर्यादामार्गे वर्णाश्रमविरुद्धनिषिद्धाचरणेन पतितत्वं तथैतन्मार्गे साक्षाद्भक्तिमार्गविरुद्धधर्माचरणेनैव पतितत्वं, भक्तिमार्गीयेषु भक्तिमार्गविरुद्धधर्माचरणनिराकरणपूर्वकं साक्षाद्भक्तिमार्गीयधर्मप्रवर्तनेन पावनसामर्थ्यमाचार्याणामेव नान्यस्यापीतिज्ञापनायोक्तं **पतितपावन** इति, मार्गान्तरीयपातकानां तत्तत्प्रकरणोक्तैः प्रायश्चित्तैरेव निवृत्तिकथनादाचार्यानुपयोगः, अत एव भक्तिमार्गविरुद्धकरणस्यैव पातकत्वज्ञापनायैव सन्न्यासनिर्णयेप्याचार्यैरुक्तं "अन्यथा पतितो भवेदि"ति स्वमार्गच्युतो भवेदित्यर्थः ॥ २७ ॥

स्वयशोगानसंहृष्टहृदयाम्भोजविष्टरः ॥
यशःपीयूषलहरीप्लावितान्यरसः परः ॥ २८ ॥

म्भोजविष्टर इति, स्वयशोगानेन संहृष्टा भक्तास्तेषां हृदयानि भक्तिमार्गीयत्वेनाम्भोजरूपाणि तान्येव विष्टररूपाण्यासनरूपाणि यस्य सः, अत्रायमाशयः, यदि सर्वात्मना स्वमार्गीयपातकनिवृत्तिर्न स्यात् तदा यशसोनिर्दुष्टत्वाद्यत्किञ्चिद्दोषसम्भावनायामपि तच्छ्रवणे तद्धृदये हर्षो न स्यात्, कदाचिद्वस्तुस्वभावाद्धर्षसम्भवेपि हृदयस्य भक्तिमार्गीयत्वञ्च स्याद्भक्तिमार्गीयत्वाभावे तद्धृदय आचार्याणां स्थितिर्न स्यात्तस्मान्निवृत्तदोषेषु स्वीयेषु हर्षादित्रितयधर्मदर्शनात् स्पष्टमेव पतितपावनत्वमिति ।

ननु कथं ज्ञायते तद्धृदये सर्वदाचार्याणां स्थितिरित्याशङ्कानिरासाय सदास्थितिज्ञापकमग्रिमनामाहुर्यशःपीयूषलहरीप्लाविताऽन्यरसा इति, यदि तेषां हृदये सर्वदाचार्यस्थितिर्न स्यात्तदाचार्याणां स्वयशोमृतलहरीभिस्तेषां हृदये प्लावितान्यरसत्वं न स्यात्, यशसः पीयूषत्वनिरूपणेन यथा स्वर्गे देवानां पीयूषमेव जीवनहेतुस्तथैतन्मार्गीयाणां तद्यशःपीयूषमेव जीवनहेतुरित्युक्तम्भवति।

नन्वाचार्ययशमः कथं तदितरसर्वरसप्लावकत्वमित्याशङ्कानिरासायाग्रिमनामाहुः पर इति,अक्षरात् परः अगणितानन्दःपुरुषोत्तम इत्यर्थस्तेनाचार्ययशसस्तदितररसप्लावन उपपत्तिरुक्ता भवति ॥ २८ ॥

लीलामृतरसार्द्रार्द्रीकृताखिलशरीरभृत् ॥
गोवर्धनस्थित्युत्साहस्तल्लीलाप्रेमपूरितः ॥ २९ ॥

एवमाचार्ययशसा तदीयानां सर्वरसप्लावकत्वमुपपाद्य भगवल्लीलारसेनापि बाह्याभ्यन्तरभेदेन पूरकत्वज्ञापनायाग्रिमनामाहुः लीलामृतरसार्द्रार्द्रीकृताखिलशरीरभृदिति, लीलारूपो योऽमृतरसस्तेनार्द्रार्द्रीकृता अखिलाःस्वीया देहभृतो येन सः, आर्द्रपदस्य द्विरुक्त्या बाह्याभ्यन्तरभेदेन सरसत्वं ज्ञापितम्भवति, एतेन बाह्याभ्यन्तरभेदेनात्यन्तमार्द्रं वस्त्रं यथा स्वजातीयशुष्कमपि स्वसम्बद्धमात्रमप्यार्द्रं करोति तथाचार्यैर्लीलामृतार्द्रीकृता भक्ताःस्वसम्बन्धात् स्वजातीयमप्यार्द्रं कुर्वन्तीतिज्ञापनायाप्युक्तं लीलामृतरसेत्यादि ।

एवं कृपया लीलामृतरसेन भक्तान् पूरयित्वा स्वप्रियस्थानज्ञापनायाग्रिमनामाहुर्गोवर्धनस्थित्युत्साह इति, गोवर्धनस्थितावुत्साहोऽध्यवसायो निश्चयो यस्य सः, एवं स्वस्थितिज्ञापनेन स्वीयानां स्वस्थानस्वरूपं ज्ञापितम्भवति ।

ननु गोवर्धनस्थितावेवोत्साहे को हेतुरित्याशङ्कानिरासायाग्रिमनामाहुस्तल्लीलाप्रेमपूरित इति, तस्य गोवर्धनस्योद्धरणेन "गगनास्मच्छरण"मिति विचार्य सर्वतः पृथक्कृत्य केवलम्स्वीयत्वस्थापनपूर्वकं क्षुत्तृषादिबाधानिवर्तकस्वरूपानन्ददानपूर्विका, या रूपा लीला तज्जनितं यत् प्रेम तेन पूरितः ॥ २९ ॥

यज्ञभोक्ता यज्ञकर्ता चतुर्वर्गविशारदः ॥

सत्यप्रतिज्ञस्त्रिगुणातीतो नयविशारदः ॥ ३

ननु यद्यप्याचार्याणां प्रभुकृतसर्वरसलीलापूर्णत्वे सत्यप्यधुना श्रीगोवर्धनोद्धरणलीलाप्रेमपूरितत्वकथने को हेतुरित्याशङ्कानिरासायाहु र्यज्ञभोक्तेति, अत्रायमाशयः, यद्यपि यागदत्तभोजनानन्तरं श्रीगोवर्धनोद्धरणं कृतं तथापि श्रीगोवर्धनोद्धरणे बलिभोजनस्यैव हेतुत्वं भोजने च [1]मुखस्यैव हेतुत्वमाचार्याणाञ्च तन्मुखरूपत्वेन तद्भोक्तृत्वमाचार्याणामेवेतिज्ञापनायोक्तं यज्ञभोक्तेति ।

ननु यद्यप्याचार्याणां यज्ञभोक्तृत्वमस्ति तथापि यागकरणव्यतिरेकेण भोक्तृत्वन्न सम्भवतीति यागकरणस्यैव पूर्वं निरूपणमुचितं तथापीन्द्रस्य वृष्टिकरणे साक्षाद्बलिभोजनस्यैव हेतुत्वं बलिभोजने यागकरणस्यैव हेतुत्वमित्युभयोः साक्षात्परम्पराहेतुत्वज्ञापनाय व्यत्यासेन निरूपणमितिज्ञापनाय पश्चाद्यज्ञकर्तेत्युक्तं, नन्वस्य यागस्य गोमखत्वेन वेदाप्रसिद्धत्वेन केवलम्भगवदुपदिष्टत्वेन भगवत एव कर्तृत्वमायातीति कथमाचार्याणां यज्ञकर्तृत्वमितिचेत् सत्यं, यद्यप्युपदे-

एवं यज्ञकर्तृत्वमुक्त्वा यज्ञेनैव व्रजवासिनां 'एषोवजानतो मर्त्या'-

नितिकथनेन

विशारद इति,

---

[1] "मुखेनैव हेतुत्वमित्याशयः, यद्यपि "शैलोस्मीत्यवदद् भूरिबलिमादद्बृहद्वपु" रितिवचनाद्भगवत एव भोक्तृत्वं तथापि" इत्यधिकं क्वचन ।

तथापि व्रजवासिनां साक्षाद्भगवत्स्वरूपानुभवाल्लोकसिद्धानां धर्मादीनामत्रानुपयोगात् स्वस्य गवाञ्च लीलोपयोगित्वेन तत्सुखेनैव सर्वपुरुषार्थसाधकत्वमिति ज्ञापनायोक्तं चतुर्वर्गविशारद इति, यद्यप्ये-"पोवजानतो मर्त्यान् कामरूपी वनौकसः हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवा"मिति व्रजवासिनः प्रति भगवद्वाक्यं तथापि वागधिष्ठातृत्वरूपमाचार्याणामेवेति तद्वाक्यमाचार्येष्वेव पर्यवस्यतीति-ज्ञापनायाचार्यनामोक्तं चतुर्वर्गेत्यादि ।

एवम्पूर्वोक्तप्रकारेण व्रजवासिनां चतुर्वर्गसाधनत्वमुपपाद्य स्वीयेष्वपि स्वमार्गीयचतुर्वर्गसाधकत्वज्ञापकमग्रिमनामाहुः सत्यप्रतिज्ञ इति, सत्या यथार्था प्रतिज्ञा यस्य सः, अस्यायमर्थः, यदाचार्यैर्भगवदाज्ञया स्वमार्गप्राकट्यं कृतं तदेयम्प्रतिज्ञापि कृता येऽस्मिन्मार्गे प्रपन्ना भविष्यन्ति तान् सर्वानेव स्वमार्गीयपुरुषार्थदानेनोद्धरिष्ये स्वमार्गीयपुरुषार्थाः [1]शुद्धपुष्टिमार्गीयपुरुषार्था इतिज्ञापनायोक्तं सत्यप्रतिज्ञ इति ।

ननु सर्वात्मना सर्वांशेन प्रतिज्ञायाः सत्यत्वमियदवधि न कुत्रापि दृष्टमिति कथमाचार्यप्रतिज्ञायाः सर्वात्मना सत्यत्वमित्याशङ्कानिरासायाग्रिमनामाहुस्त्रिगुणातीत इति, त्रिगुणाः सत्त्वरजस्तमोरूपास्तानतीतोऽतिक्रान्तः, अनेन सत्यप्रतिज्ञत्वे हेतुरुक्तः, अत्रायमाशयः,

१ "पुष्टिमार्गे हरेर्दास्यं धर्मोर्थो हरिरेव हि कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुवमित्युक्ता" इत्यधिकं क्वचन ॥

अन्येषाम्प्रकृतिगुणसम्बन्धात् प्राकृतत्वेन दोषसम्बन्धात् तत्कृतप्रतिज्ञाया अपि दुष्टत्वान्निर्दुष्टस्यैव सत्यत्वात् तत्प्रतिज्ञाया अप्यसत्यत्वमाचार्याणान्तु प्रकृतिगुणराहित्येन निर्दुष्टत्वात्तत्प्रतिज्ञाया अपि निर्दुष्टत्वेन सत्यत्वमेवेतिज्ञापनायोक्तं त्रिगुणातीत इति ।

एवं सत्यप्रतिज्ञत्वे हेतुमुपपाद्य यदुद्धारार्थम्प्रतिज्ञाकरणं तेषां स्वमार्गीयमर्यादाज्ञापनाय स्वसिद्धान्तनिरूपकग्रन्थकरणत्वज्ञापनायाग्रिमनामाहुर्नयविशारद इति, नये स्वसिद्धान्तमार्गे विशारदः अत्यन्तनिपुण इति ॥ २० ॥

स्वकीर्तिवर्धनस्तत्त्वसूत्रभाष्यप्रदर्शकः ॥

मायावादाख्यतूलाग्निर्ब्रह्मवादनिरूपकः ॥ २१ ॥

एवं स्वमार्गीयाणां स्वमार्गीयमर्यादाज्ञापनग्रन्थकरणं निरूप्य तत्करणे हेतुभूतमग्रिमनामाहुः स्वकीर्तिवर्धन इति. स्वमार्गीयरहस्यग्रन्थनिरूपणेन स्वीयेषु स्वकीर्तिवर्धन इति ।

एवं स्वीयेषु स्वकीर्तिवर्धनत्वमुपपाद्य मायावादादिशास्त्रप्रवर्तकपण्डितेष्वपि स्वकीर्तिवर्धनत्वज्ञापनायाग्रिमनामाहुस्तत्त्वसूत्रभाष्यप्रदर्शक इति, तत्त्वसूत्राणि तत्त्वनिरूपकाणि व्याससूत्राणि तेषां भाष्यं तदर्थप्रतिपादकं शास्त्रं तस्य प्रदर्शकः प्रकाशक इत्यर्थः, यद्यपि शङ्कराचार्यादीनामपि व्याससूत्रभाष्यकर्तृत्वं वर्तते तथापि तत्र लक्षणामाश्रित्य सूत्रार्थव्याख्यानात्तस्य "सत्यं ज्ञानमनन्तम्ब्रह्म"

"रसो वै स" इत्याद्युपनिषद्वाक्यविरोधान्न साक्षात्तत्त्वसूत्रभाष्यप्रतिपादकत्वमाचार्याणान्तु "सत्यं ज्ञानमनन्तम्ब्रह्म" "रसो वै स" इत्याद्युपनिषद्वाक्याविरोधेन ब्रह्मधर्मप्रतिपादनपूर्वकं साक्षात्सूत्रार्थनिरूपकत्वज्ञापनायोक्तं तत्त्वसूत्रभाष्यप्रदर्शक इति, एतेन मायावादादिशास्त्रप्रवर्तकपण्डितेष्वप्यसाधारणकीर्तिवर्धनत्वमुक्तम् ।

नन्वधुना लोके मायावादस्यैवातिप्रचुरत्वेन शास्त्रान्तरमतदूषकत्वम्प्रतिभाति यथा तथाचार्यप्रतिपादितव्याससूत्रभाष्यस्यापि दूषकत्वम्भविष्यतीत्याशङ्कानिरासायाभिमन्नामाहुर्मायावादाख्यतूलाग्निरिति, मायावाद इत्याख्या नाम यस्य तदेव तूलमिव तूलं तस्याग्निर्दाहक इत्यर्थः, अत्र मायावादस्य तूलत्वनिरूपणेनाचार्याणामग्नित्वनिरूपणेन च यथा महानपि तूलराशिरल्पाग्निसम्बन्धेनापि दग्धो भवति तथाचार्यनिरूपितकतत्त्वसूत्रार्थनिरूपणेनापि सर्वो मायावादो निराकृतो भवतीतिज्ञापनायाप्युक्तं मायावादाख्येत्यादि, ननु पूर्वम्मायावादनिराकर्त्तेति निरूप्यापि 'पुनर्यन्मायावादाख्यतूलाग्निरि' त्युक्तं तस्यायमाशयः, पूर्वन्तु सामान्यतो निराकरणमुक्तमधुना च प्रतिसूत्रानिराकरणत्वज्ञापनायोक्तमिति न पौनरुक्त्यमिति सर्वमनवद्यम् ।

ननु मायावादनिराकरणं कं वादमाश्रित्य कृतमित्याशङ्कानिरासायाभिमन्नामाहुर्ब्रह्मवादनिरूपक इति, "सर्वं खल्विदम्ब्रह्म" "यदिदं किञ्च तत्सत्यमित्याचक्षत" इत्याद्युपनिषद्वाक्यप्रतिपादितो यो ब्रह्मवादस्तन्निरूपकः तत्प्रतिपादक इत्यर्थः ॥ ३१ ॥

अप्राकृताखिलाकल्पभूषितः सहजास्मितः ॥
त्रिलोकीभूषणम्भूमिभाग्यं सहजसुन्दरः ॥ ३२ ॥

एवं ब्रह्मवादनिरूपकत्वमुपपाद्यामिमनाम्नाऽप्राकृताखिलाकल्पभूषितत्वकथनस्यायमाशयः व्याससूत्रचतुर्थाध्यायस्य फलाध्यायत्वात् स्वमार्गफलत्वेन भगवद्भाववत्त्वेनाप्राकृता अलौकिका अखिलाः सर्वे ये लीलारसभावास्त एवाकल्पत्वेन शोभारूपास्तैर्भूषितस्तच्छोभायुक्तः, यद्यप्यन्यैरपि भाष्यकृद्भिः फलाध्याये स्वस्वमार्गीयफलं निरूपितमस्ति तथापि सर्वोत्कृष्टलीलारसफलनिरूपकत्वकृतशोभाचार्याणामेव नान्येषामपीतिज्ञापनायोक्तमप्राकृताखिलाकल्पभूषित इति ।

एवं लीलारसभावजनितशोभायुक्तत्वन्निरूप्य तद्युक्तत्वज्ञापकमग्रिमनामाहुः सहजास्मित इति, सहजं निरूपितलीलारसस्मरणस्वभावजनितं स्मितं यस्य सः ।

एतेनाचार्याणामलौकिकाकल्पशोभां सकार्यां निरूप्यातःपरमाचार्याणां शोभाकृतिहेतुत्वज्ञापनायाग्रिमनामाहुस्त्रिलोकीभूषणमिति, अत्रायमाशयः, त्रयाणां लोकानां समाहारस्त्रिलोकीतिव्युत्पत्त्याचार्याणान्तत्र भूषणत्वमसम्भावितमिति त्रिलोकयास्तमोरजःसत्त्वात्मकत्वेन तद्गुणविशिष्टाः स्वकीया एव त्रिलोकीपदेनोच्यन्ते तेषाम्भूषणं

शोभाचार्यसम्बन्धकृतैव नान्यथेतिज्ञापनायोक्तं त्रिलोकीभूषणमिति ।

एवं स्वीयानां शोभाहेतुत्वंनिरूप्याचार्यचरणसम्बन्धाद्भूमेरप्युत्कर्षसाधकमभिमन्नामाहुर्भूमिभाग्यमिति, भूमेर्भाग्यं पूर्णपुण्यफलमित्यर्थः, अत्रायम्भावः, भूमेर्भक्तत्वादाचार्यैः शुद्धभक्तिमार्गस्यैव प्रकटितत्वात्तज्जनितसन्तोषेणाचार्यस्थितिम्भूमिः स्वभाग्यत्वेनैव मनुत इतिज्ञापनायोक्तम्भूमिभाग्यमिति, भूमेः शुद्धपुष्टिमार्गीयभक्तत्वं श्रीभागवत एव "भूमेः सुरेतरवरूथविमर्दिताया" इत्यादिना भूमिमर्दनक्लेशनिवृत्तिहेतुत्वेन भगवत्प्राकट्येनैव निरूपितमत एव फलप्रकरणेपि "व्रजभुवः शमयन खुरतोद"मित्युक्तम् ।

एवमाचार्याणाम्भक्तिमार्गप्रकटकत्वेन हेतुना भूमिभाग्यत्वंनिरूप्य स्वीयानान्निर्हेतुकदर्शनमात्रस्यैव स्वभाग्यहेतुत्वज्ञापकधर्मविशिष्टमभिमन्नामाहुः सहजसुन्दर इति, यद्यपि स्वीयानां साक्षात्स्वरूपदर्शनमेव स्वभाग्यस्फूर्तौ हेतुस्तथापि सौन्दर्यस्यानागन्तुकत्वेन स्वाभाविकत्वज्ञापनायोक्तं सहजसुन्दर इति ॥ ३२ ॥

अशेषभक्तसम्प्रार्थ्यचरणाब्जरजोधनः ॥

एवम्भक्तानां भाग्यरूपत्वेनाचार्याणां स्वरूपंनिरूप्य तेषामेव तच्चरणारविन्दरजस ऐहिकामुष्मिकसर्वपुरुषार्थत्वज्ञापनायाभिमन्नामाहुरशेषभक्तसम्प्रार्थ्यचरणाब्जरजोधन इति, अशेष-

भक्तैः सम्यगैहिकामुष्मिकसर्वपुरुषार्थसाधकत्वेन प्रार्थ्यं चरणाब्जरजोधनं यस्य सः, अनेन भक्तानां चरणारविन्दरजो विहायान्यपदार्थस्य प्रार्थनीयत्वाभावो ज्ञापितः।

इत्यानन्दनिधेः प्रोक्तन्नाम्नामष्टोत्तरं शतम् ॥३३॥
श्रद्धाविशुद्धबुद्धिर्यः पठत्यनुदिनञ्जनः ॥
स तदेकमनाः सिद्धिमुक्तामप्राप्नोत्यसंशयः॥ ३४ ॥

एवमाचार्याणामष्टोत्तरशतनामानि निरूप्योपसंहरन्तीत्यानन्दनिधेरिति, इत्यनेन प्रकारेणानन्दनिधेरानन्दसमुद्रस्याचार्यस्य, आचार्याणामानन्दसमुद्रत्वोक्त्या सदागाधत्वपूर्णत्वानवरतोच्छलत्तरङ्गवत्त्वविविधलीलारसभावरत्नाकरत्वादिधर्मवत्त्वं ज्ञापितम्भवति, नाम्नामष्टोत्तरं शतं मया श्रीविट्ठलेशेन प्रोक्तं प्रकर्षेण कथितं, अत्र कथने प्रशब्दोपादानेन सिद्धानामेव नाम्नां प्रकाशकत्वन्तु कल्पयित्वा कथनमिति ज्ञापितं, एवं नामप्रकाशकत्वमुपपाद्य तत्प्रकाशनप्रयोजनमुत्तरार्धेनाहुः श्रद्धेति, श्रद्धया विशेषेण शुद्धा दुःसङ्गाद्यनपनोद्या बुद्धिर्यस्य सः श्रद्धाविशुद्धबुद्धिस्तादृशः सन् यः जनः पठति, अत्र य इति सामान्योक्त्या स्वमार्गीयत्वमेव हेतुर्न तु वर्णविशेषस्यापि पठने निमित्तत्वमिति ज्ञापितं, एवम्पठने स्वीयमात्राधिकारित्वमुपपाद्य पाठस्यावश्यकत्वज्ञापनाय कालनियममाहुरनुदिनमिति,

प्रतिदिनमित्यर्थः, यः पठति स पूर्वन्तदेकमना भवति तेष्वेवाचार्येष्वे- वैकं केवलं मनो यस्य तादृशो भवति तदनन्तरमुक्तां कृष्णाधरामृता- स्वादरूपां सिद्धिं फलम्प्राप्नोति, स्वस्वमनोऽभिलषितप्रकारेण फलानु- भवज्ञापनाय प्रशब्दः, एवम्फलप्राप्तिमुक्त्वा फलप्राप्तेरव्यभिचारित्व- ज्ञापनायाहुरसंशय इति, निःसन्दिग्धमित्यर्थः ॥ ३३ ॥ ३४ ॥

तदप्राप्तौ वृथा मोक्षस्तदाप्तौ तद्गतार्थता ॥

अतः सर्वोत्तमं स्तोत्रञ्जप्यं कृष्णरसार्थिभिः॥३५॥

एवमव्यभिचारेण स्वकीयेषु स्वमार्गीयफलप्राप्तिन्निरूप्यास्य फलस्येतरमार्गीयमुक्तिफलापेक्षयाधिक्यज्ञापनायाहुस्तदप्राप्तौ वृथा मोक्ष इति, तस्य स्वमार्गीयफलस्याप्राप्तौ मोक्षोऽपि सायुज्यादि- रपि वृथा एतन्मार्गीयफलाभावान्निरर्थक इत्यर्थः, तस्य स्वमार्गीय- फलस्याप्तौ प्राप्तौ सत्यां तस्य सायुज्यादेर्गतार्थता निरर्थकतेत्यर्थः, एवं स्वमार्गीयफलस्य सर्वोत्कृष्टत्वन्निरूप्यैतत्स्तोत्रपाठस्यैवैतत्फल- साधकत्वज्ञापनायावश्यकत्वनिरूपणाय चाहुरत इति, यतोऽस्य स्तोत्र- पाठस्यैतत्फलसाधकत्वमत एवैतत्स्तोत्रस्य सर्वोत्तमत्वमितिज्ञापनाय स्तोत्रनामनिरूपणपूर्वकम्पाठस्यावश्यकत्वमुक्तं, पूर्वं स्तोत्रस्य पाठ- कथनेनाधुना जप्यत्वकथनस्यायमाशयः, यावत् सर्वं स्तोत्र- न्निःसन्दिग्धन्नायाति तावत्पाठ एव कर्तव्यः सम्यगागमनानन्तरं

गुप्ततया जप एव कर्तव्यो न तु प्रकटतया पठनीयमितिज्ञापनायोक्त-जप्यमिति, एवं स्तोत्रस्य जप्यत्वम्प्रतिपाद्य जपाधिकारिण आहुः कृष्णरसार्थिभिरिति ॥ ३८ ॥

एवं स्तोत्रजपाधिकारिणो निरूप्य स्तोत्रसमाप्तिं निरूपयन्तीति श्रीमदिति ।

॥ इति श्रीमदग्निकुमारप्रोक्तं श्रीसर्वोत्तमस्तोत्रं सम्पूर्णम् ॥

एवमाचार्यनामानि विवृतानि यथामति ॥
पितृपादाब्जकृपया नान्यसाधनतो मया ॥ १ ॥

यदत्र बुद्धिदोषेण विवृतावन्यथा कृतिः ॥
क्षमन्त्वाचार्यचरणा मद्भृत्योऽयमिति स्वतः ॥ २ ॥

¹आचार्यनाममसनकाष्टकर्माङ्कितानि श्रीविट्ठलेतिरसरागनिर्गतानि ॥
श्रीवल्लभोक्तविवृतेर्गुणगुम्फितानि कुर्वन्तु कण्ठभुवि भक्तजना जपाय ॥३॥

॥ इति श्रीमत्प्रभुचरणकृतार्थं वल्लभविरचिता श्रीसर्वोत्तमस्तोत्रविवृतिः सम्पूर्णा ॥

---

१ इदम्पद्यमन्यग्रन्थे नास्ति ।

॥ श्रीकृष्णाय नमः ॥ श्रीगोपीजनवल्लभाय नमः ॥
॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ॥ अथ श्रीरघुनाथजीकृतं श्रीसर्वोत्तमस्तोत्रविवरणं प्रारभ्यते ॥

यत्कृपादृष्टिमालम्ब्य समुत्तीर्णा भवाम्बुधिम् ॥
गृहान्धकूपमण्डूकास्तं वन्दे वल्लभात्मजम् ॥ १ ॥

उद्धर्तुरग्रे सोऽभूद्यो जीवान् श्रीवल्लभाभिधः ॥
तन्नामाष्टोत्तरशतं निर्वक्ष्यामि यथामति ॥ २ ॥

आदौ सकलशिष्टसम्मततया स्तुतिरूपम्मङ्गलं प्रतिजानते प्राकृतधर्मानाश्रयमिति ।

प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति ।
निगमप्रतिपाद्यं यत्तच्छुद्धं साकृति स्तौमि ॥ १ ॥

प्राकृता लौकिका ये धर्माः कामक्रोधादयस्तान्नाश्रयते भजते, त एनन्नाश्रयन्त इति वा, ननु सर्वधर्मनिराकरणात् [illegible]

कन्तव्(नेत्याहुः अप्राकृतेति, प्राकृताप्राकृतभेदेन पदार्थद्वैविध्यस्वीका-राद्दीश्वरे प्राकृतधर्मनिषेधेप्यलौकिकधर्मवत्त्वमविरुद्धमतोप्राकृता ये निखिला. सर्वे धर्मा ऐश्वर्यादयो रूपं स्वरूपं च यस्य, इतिशब्दः प्रका रार्थः, तेनैवम्प्रकारकं यद्ब्रह्म तु तत्तोमीत्यन्वय ,तदेव विशिष्यते निगमे-ति, काण्डत्रयात्मकेपि वेदे प्रतिपाद्यन्निर्णेतव्यं, शुद्धन्निर्मल, साकृति आकृत्या विग्रहेण सहितं तत्वन्तरा स्वीकृतम् ॥ १ ॥

नन्वेतादृशं तत्स्वरूपं यदि वेदप्रतिपाद्यमेव तदेतावन्त कालं कैश्चिदपि वेदविद्भिः किमिति न वर्णितं तन्माहात्म्यमत आहु. कलिकालेति ।

कलिकालतमश्छन्नदृष्टित्वाद्विदुषामपि ॥
सम्प्रत्यविषयस्तस्य माहात्म्यं समभूद्भुवि ॥ २ ॥

कलिकालसम्बन्धि यत्तमोज्ञानं प्रकाशप्रतिबन्धकत्वात् तेन छन्ना आच्छादिता दृष्टय. प्रमाकरणानि येषां तादृशत्वाद्विदुषां ज्ञानवतामपि सम्प्रति साम्प्रतं तस्य माहात्म्यं ज्ञानाविषय एव भुव्यभूत्, अतस्तदज्ञानादनिरूपणन्न दोषाय ॥ २ ॥

तर्हि कथमिदानीं ज्ञात ज्ञापकाभावादिति चेन्न स्वैनैवेत्याहु दययेति ।

दयया निजमाहात्म्यं करिष्यन् प्रकटं हरिः ॥
वाण्या यदा तदा स्वास्यं प्रादुर्भूतं चकार हि ॥३॥

हरिः सकलदुःखहरणशीलो दयया दीनवात्सल्यमवलम्ब्य वाण्या स्वोक्तवेदरूपवाण्या निजमाहात्म्यं प्रकटं करिष्यन् "लक्षणहेत्वोः क्रियायाः" इति हेतौ शतृप्रत्ययः, एवंविधो यदा बभूव तदा स्वास्यं स्वमुखाधिष्ठातारं वैश्वानरं प्रादुर्भूतं चकार कृतवान्, हि प्रसिद्धौ ॥ ३ ॥

ननु वागधिष्ठातृवचनादेव सर्वोऽप्यर्थो ज्ञास्यते किमनेन प्रयासेनेत्यत आहुस्तदुक्तमिति ।

तदुक्तमपि दुर्बोध सुबोधं स्याद्यथा तथा ॥
तन्नामाष्टोत्तरशतं प्रवक्ष्याम्यखिलाघहृत् ॥ ४ ॥

तात्पर्यापरिचयात्तदुक्तमपि दुर्बोधमेव तदेव पुनः सुबोधं यथा स्यात्तथा स्तुतिरूपं तदीयं नामाष्टोत्तरशतं प्रवक्ष्यामि च, तन्नाम्नां प्रवचनात् कथं सुबोधत्वं तदुक्तस्येत्यत आहुः अखिलाघहृदिति, बोधप्रतिबन्धः पापकृतोऽतस्तदपगमात्सुबोधत्वं युक्तमेव ॥ ४ ॥

अष्टोत्तरशतनाम्नां मन्त्ररूपत्वादृष्यादिकमाहुः

ऋषिरग्निकुमारस्तु छन्दोऽनुष्टुबिहोच्यते ॥
श्रीकृष्णास्यं देवता च बीजं कारुणिकःप्रभुः ॥ ५ ॥
विनियोगो भक्तियोगप्रतिबन्धविनाशने ॥
कृष्णाधरामृतास्वादसिद्धिरत्र न संशयः ॥ ६ ॥

अग्निकुमारः स्वयमेव ऋषिः, श्रीकृष्णास्यं श्रीवल्लभः, अन्यत स्पष्टम् ॥ ५-६ ॥

आनन्दः परमानन्दः श्रीकृष्णास्यं कृपानिधिः ॥
दैवोद्धारप्रयत्नात्मा स्मृतिमात्रार्तिनाशनः ॥ ७ ॥

आदौ परममङ्गलनामाहु. आनन्द इति, स्वरूपस्यैवानन्दरूपत्वात् आनन्द इति, आसमन्तान्नन्दयति समर्धयति स्वभक्तानिति वा, इयन्न्यूनो नन्दो व्रजराज एवेति वा, न्यूनत्वं तु ब्राह्मण्यकृतमेव, श्रीकृष्णपितृत्वमुभयत्रापि समानमेव, [2]प्राकट्यं लोकप्रतीत्या, तत् वसुदेवगृह एव, अत्र तूभयमिति युक्तमेवाधिक्यम् ॥ १ ॥

**परमानन्द** इति, **परमश्चासावानन्दश्च**, परम उत्कृष्टो रासोत्सवादिजनित आनन्दो यस्य यस्मादिति वा, परमेण श्रीकृष्णेन

---

१ नाम्ना छन्दो जगत्यसावित्यन्येषाम्पाठ ।

२ इत आरभ्याधिकं वचन ।

आनन्दो यस्येति वा, पिपर्तीति परो विष्णुः, मा श्रीः, तयोरप्यानन्दो यस्मादिति वा ॥ २ ॥

श्रीकृष्णास्यमिति, "स्वास्यं प्रादुर्भूतं चकार ही"ति यदुक्तं तदर्थमिदं नाम, श्रीकृष्णस्यास्यं मुखं वैश्वानराख्यं, इदं तु नैमित्तिकं रूपं न वास्तव्यं, अत एव तत्स्वरूपाभिज्ञैरुक्तं 'अज्ञानाद्यन्धकारप्रशमनपटुताख्यापनाय त्रिलोक्यामग्नित्वं वर्णितं ते कविभिरपि सदा, वस्तुतः कृष्ण एवे"ति, यद्वा कृष्णपदेन कृष्णद्वैपायनोऽप्युच्यते, तेन कार्यभेदेनोभयोरप्यास्यं, भगवदास्यत्वं तु [१]भक्ताह्लादकत्वात् सर्वरसभोक्तृत्वाज्ज्ञेयं, व्यासास्यं तु [२]श्रीभागवताभिप्रायवर्णनयाथार्थ्यात्, अत एव श्रीभागवतविवरणारम्भे तैरुक्तं "अतो मुदा गढार्थं प्रकटीकरोमि सततं व्यासस्य विष्णोः प्रिय"मिति ॥ ३ ॥

कृपानिधिरिति, कृपाया दयाया निधिरक्षयकोश इत्यर्थः ॥ ४ ॥

दैवोद्धारप्रयत्नात्मेति, दैवानां जीवानां सर्वदु खादुद्धरणमुद्धारस्तदर्थो य. प्रयत्नो भक्तिमार्गप्राकट्यादिना तत्र आत्मा चित्तं यस्य, प्रयत्नरूप एव वा, निसर्गासुरानुद्धरणेऽपि न वस्तुदोष, भगवतैव तथाकरणात्, उक्तं च गीतायां "प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा'" इत्यादिना ॥ ५ ॥

१ भक्तहृदयप्रकाशकत्वादित्यपि पाठः ।

२ सामर्थ्यादित्यपि पाठः ।

स्मृतिमात्रार्तिनाशन इति, [1]स्मरणमात्रेणार्ति त्रिविधतापं भक्तानां नाशयतीति, स्मरणं तूभयथा ज्ञेयं, ये भक्ताः स्मरन्ति यांस्ते स्मरन्ति ॥ ६ ॥ ७ ॥

**श्रीभागवतगूढार्थप्रकाशनपरायणः ॥**

**साकारब्रह्मवादैकस्थापको वेदपारगः ॥ ८ ॥**

श्रीभागवतशास्त्रस्य गूढो गुप्तो योर्थस्तस्य प्रकाशने व्यक्तीकरणे परायण उद्युक्तः,तत्प्रकाशने परमुत्कृष्टं अयनं यस्येति वा,तत्प्रकाशनपरो भूत्वा आ [2]अयते इह प्रकटीभवतीति वा, उक्तं च तैः "अर्थं तस्य विवेचितु"मिति श्लोके ॥ ७ ॥

साकारब्रह्मवादैकस्थापक इति, निराकारत्वनिराकरणपूर्वकं साकारं ब्रह्म यत्रोच्यते स साकारब्रह्मवादः स चासावेकश्च तस्य स्थापको दृढकर्तेत्यर्थः, एकश्चासौ स्थापकश्चेति वा, न ह्यन्यस्यैवंविधं सामर्थ्यमस्ति ॥ ८ ॥

वेदपारग इति, वेदानां पारं पर्यवसानं गतवान् ज्ञातवानित्यर्थः ॥ ९ ॥ ८ ॥

**मायावादनिराकर्ता सर्ववादिनिरासकृत् ॥**

**भक्तिमार्गाब्जमार्तण्डःस्त्रीशूद्राद्युद्धृतिक्षमः ॥ ९ ॥**

---

१ स्मरणादार्तिमितिपाठान्तरम् ।

२ अयन इत्यपि पाठ. ।

**मायावादनिराकर्तेति,** ईश्वरमारभ्य यत्किञ्चित्तत्सर्वं नासीन्न-विद्यते न वा भविष्यतीत्येतादृशो यो वादः स मायावादस्तस्य **निराकर्ता** तिरस्कारक इत्यर्थः, मायिकत्वप्रतिपादकश्रुतिपुराणादीनां तु तात्पर्यं वैराग्यपरमिति तु निबन्धादिषु प्रपञ्चितमेव ॥ १० ॥

**सर्ववादिनिरासकृदिति,** ब्रह्मवादिव्यतिरिक्ताः सर्वे ये वादिनस्तार्किकबौद्धादयस्तेषां निरास उत्तराम्भूर्तिस्तां करोतीति ॥ ११ ॥

**भक्तिमार्गाब्जमार्तण्ड इति,** भक्तिर्निरुपधिस्नेहः स मृग्यते विचार्यते यस्मिन् शास्त्रे स **भक्तिमार्गः** भगवच्छास्त्रं तदेवाब्जं रस-मूलकत्वात्तस्य मुकुलितस्यान्तःप्रकाशने **मार्तण्ड** इव मार्तण्ड सहस्रकिरण इत्यर्थः ॥ १२ ॥

**स्त्रीशूद्राद्युद्धृतिक्षम इति,** स्त्रियश्च शूद्राश्च तदादयो ग्रथ बन्ध्वादयस्तेषामुद्धृतावुद्धरणे क्षमः समर्थ इत्यर्थः, यद्यपि "स्त्रीशूद्र द्विजबन्धूना"मित्यादिना भारताख्यानस्यापि साधनत्वमुक्तं तच्च स्वर्ग एव न भगवत्प्राप्तौ, एतदनुगृहीतास्तु साक्षाच्छ्रीकृष्णं प्राप्नुवन्त्येवेति महद्वैशिष्ट्यम् ॥ १३ ॥ ९ ॥

अङ्गीकृत्यैव गोपीशवल्लभीकृतमानवः ॥
अङ्गीकृतौ समर्यादो महाकारुणिको विभुः ॥१०॥

**अङ्गीकृत्यैव गोपीशवल्लभीकृतमानव** इति, अङ्गीकृतिः स्वीयत्वेन परिग्रहः तन्मात्रेणैव गोपीशस्य वल्लभीकृता प्रियत्वास्पद प्रापिता मानवा दैवा जीवा येन ॥ १४ ॥

[1]नन्वेङ्गीकृतेर्जीवकृतसाधनापेक्षत्वेन निषेधोक्त्या जीवप्रपत्ते स्वभावभेदेनानेकविधत्वेपि न पूर्वोक्तफलभेद सम्भवति तथा च भक्तिमार्गीयप्रपत्त्यादिसाधनोच्छेद प्रसज्येताप्रयोजकत्वादित्याशङ्कयनामान्तरेण विशेषमाहु **अङ्गीकृतौ समर्याद** इति, [2]अङ्गीकारेपीय स्वरूपमर्यादैवेति नैतत्सापेक्षत्वमनुचितमिति **अङ्गीकृतेरिति** ज्ञेय, किञ्च सहजदोषाणामनिवार्यत्वेन तत्कृतप्रतिबन्धेप्रेमफलाभावान्नाशो न शङ्कनीयो यतोङ्गीकृतौ इत्ताया **समर्यादो** "न मे भक्त प्रणश्यती"ति मर्यादासहित इत्यर्थ , सदोषस्य भक्तत्वमसम्भावितमिति न वाच्य, "अपि चेत्सुदुराचारो भजते मामनन्यभा"गितिवचनात् ॥ १५ ॥

**महाकारुणिक** इति, करुणास्यास्तीति कारुणिकः, महांश्चासौ कारुणिकश्च, महत्त्व तु भगवत्सम्बन्धसम्पादनेनौपम्यात् ॥ १६॥

**विभुरिति**, विभवति सर्वानिष्टे, विशिष्टो भवत्यन्येभ्य इति वा ॥ १७॥ १०॥

---

१ अयमाभासग्रन्थो नास्त्येव क्वचन ।

२ अङ्गीकारेपि **समर्यादो** मर्यादया सहैव, प्रपत्त्यनुसारेण फलदान मर्यादा, "ये यथा मां प्रपद्यन्त" इतिवाक्यमर्यादयैव टीकाग्रन्थ क्वचन ।

अदेयदानदक्षश्च महोदारचरित्रवान् ॥
प्राकृतानुकृतिव्याजमोहितासुरमानुषः ॥ ११ ॥

अदेयदानदक्षश्चेति, लोके यः[1]कश्चन रसायनादिकमपि न प्रकाशयति, अयं तु ब्रह्मादिदुर्लभमपि स्वसर्वस्वं भक्तेभ्यो दत्तवानतोऽदेयस्यापि दाने दक्षः प्रवीणः, चकारादेयस्यापि ॥ १८ ॥

महोदारचरित्रवानिति, उदाराण्यविनिर्मलानि प्रशस्तानि चरित्राणि कर्माणि यस्य विद्यन्ते स उदारचरित्रवान्, महांश्चासावुदारचरित्रवांश्चेति, महदित्स्वति वा, महान्ति बहून्युदारचरित्राणि विद्यन्ते यस्येति वा, महान्तो ये उदारचरिता भक्तास्ते सन्त्यस्येति वा ॥ १९ ॥

प्राकृतानुकृतिव्याजमोहितासुरमानुष इति, प्राकृता लौकिका ये जीवास्तेषामनुकृतिस्तद्वदेव कायक्लेशादिसहनं तद्व्याजेन तन्मिषेण मोहिता आसुरमानुषा येन, अनुकरणं विनान्यथाचरणं तेषां न स्यादतस्तत्करणम् ॥ २० ॥ ११ ॥

वैश्वानरो वल्लभाख्यः सद्रूपो हितकृत्सताम् ॥
जनशिक्षाकृते कृष्णभक्तिकृन्निखिलेष्टदः ॥ १२ ॥

वैश्वानर इति, 'विश्वे सर्वे नयन्त्येनं विश्वान्नयत्यय'मित्यादिवैदि-

---

१ कश्चनेतिपदं नास्ति क्वचन ।

कौ निरुक्तिर्यास्कोक्ता ज्ञेया, 'विश्वे सर्वेपि नरा ईशितव्या यस्ये'-त्यर्थोऽयं, संज्ञाशब्दत्वान्न व्युत्पत्त्याग्रहः कार्यः ॥ २१ ॥

वल्लभाख्य इति, वल्लभ इत्याख्या पितृमातृकृता यस्य, "ममनाम प्रथमं जातवेदाः पिता माता च दधतुर्यदग्रे"इतिश्रुतेर्मेकप्रियत्वादन्वर्थसंज्ञापि ज्ञेया ॥ २२ ॥

सद्रूप इति, सत् सुन्दरं रूपं यस्येति, सदविनाशि रूपं यस्येति. सत्सु प्रकाश्यं रूपं यस्येति वा, सर्वं प्रपञ्चजातं सत्त्वेन रूपयतीति वा,भक्तप्रपञ्चजसत्त्वं रूपयतीति वा,सन्तस्तत्स्वरूपाभिज्ञा रूपं यस्येति वा, सत्सु यज्ञादिषु स्थितं रूपं यस्येति वा, "यज्ञे तपसि दाने च स्थितिः सदिति चोच्यत" इतिभगवद्वचनात् ॥ २३ ॥

हितकृत्सतामिति, सतां भक्तानां सदा हितमेव कृतवान्नाहितमित्यर्थः, सविशेषणमेकं नाम ज्ञेयम् ॥ २४ ॥

जनशिक्षाकृते कृष्णभक्तिकृदिति, जनानां दैवानां शिक्षार्थं कृष्णभक्तिप्रतिपादकं शास्त्रं सेवां वा कृतवान् प्रकटितवानित्यर्थः, सर्वरसपूर्णत्वात् स्वस्य न प्रयोजनमतोन्यार्थमेवेतिभावः ॥ २५ ॥

निखिलेष्टद इति, निखिलं यथेष्टं इष्टं भगवत्सम्बन्धं दत्तवानित्यर्थः, निखिलेष्विति वा ॥ २६ ॥ १२ ॥

सर्वलक्षणसम्पन्नः श्रीकृष्णज्ञानदो गुरुः ॥
स्वानन्दतुन्दिलः पद्मदलायतविलोचनः ॥ १३ ॥

सर्वलक्षणसम्पन्न इति, सर्वाणि यानि शुभलक्षणानि सामुद्रिकप्रसिद्धानि तैः सम्पन्नः समृद्ध इत्यर्थः, सर्वं लक्षयतीति सर्वलक्षणो भगवान् तेन सम्पन्न इति वा ॥ २७ ॥

श्रीकृष्णज्ञानद इति, श्रीकृष्णो ज्ञायते सर्वोपास्यत्वेन यस्मिन् ज्ञाने शास्त्रे तच्छ्रीकृष्णज्ञानं तद्ददाति स्वीयेभ्य इति, श्रीकृष्णज्ञानेन अज्ञानं तत्कार्यं द्यति नाशयतीति वा, श्रीर्मायाकृष्णश्च तयोरिति वा ॥ २८ ॥

अत एव गुरुरिति, गृणात्युपदिशति तत्त्वं गुरुः, गुणैर्गरिष्ठ इति वा ॥ २९ ॥

स्वानन्दतुन्दिल इति, स्वस्यैव स्वरूपानन्देन तुन्दिलस्तुन्दवान् न तु विषयसुखेनेत्यर्थः ॥ ३० ॥

पद्मदलायतविलोचन इति, कमलपत्रसदृशे ईषदारुण्यादिगुणयुक्ते आयते विशाले लोचने यस्य ॥ ३१ ॥ १३ ॥

कृपादृग्वृष्टिसंहृष्टदासदासीप्रियः पतिः ॥
रोषदृक्पातसम्प्लुष्टभक्तद्विड् भक्तसेवितः ॥ १४ ॥

कृपादृग्वृष्टिसंहृष्टदासदासीप्रिय इति, कृपापूर्विका दृक् कृपादृक् सैव भक्ततापनाशकत्वाद्वृष्टिस्तन्मात्रेणैव सम्यक् हृष्टा आनन्दपूर्णा ये दासा दास्यश्च तासां तेषां च प्रियः, ताः प्रिया

यस्येति वा ॥ ३२ ॥

पतिरिति, पाति सर्वान् स्वीयानिति पतिः, पूर्वोक्तदासीनामिति वा ॥ ३३ ॥

रोषदृक्पातसम्प्लुष्टभक्तद्विडिति, स्वभक्तान् ये द्विषन्ति ते भक्तद्विषः, रोषपूर्वकदृष्टिपातमात्रेणैव सम्यक् प्लुष्टा दग्धा भक्तद्विषो येन यस्येति वा ॥ ३४ ॥

भक्तसेवित इति, भक्तैःसेवित इति ॥ ३५ ॥ १४ ॥

सुखसेव्यो दुराराध्यो दुर्लभाङ्घ्रिसरोरुहः ॥
उग्रप्रतापो वाक्सीधुपूरिताशेषसेवकः ॥ १५ ॥

सुखसेव्य इति, सर्वात्मभावविद्भिर्भक्तैः सुखेनैव सेवितुं योग्यः ॥ ३६ ॥

तदन्यैः भावाहिकैर्दुराराध्य दुःखेन सेव्य इत्यर्थः ॥ ३७ ॥

दुर्लभाङ्घ्रिसरोरुह इति, दुर्लभे दुःप्रापे अङ्घ्रिसरोरुहे चरणकमले यस्येति ॥ ३८ ॥

उग्रप्रताप इति, उग्रः सर्वप्रतिपक्षोपमर्दकः प्रतापोऽनुभावो यस्येति ॥ ३९ ॥

वाक्सीधुपूरिताशेषसेवक इति, श्रीकृष्णकथारूपा वागेव सीधुरमृतं तेन पूरिताः सम्पूर्णमनोरथा तदतिरिक्ताभिलाषपराङ्मुखा सेवका यस्य यस्मादिति वा ॥ ४० ॥ १५ ॥

श्रीभागवतपीयूषसमुद्रमथनक्षमः ॥
तत्सारभूतरासस्त्रीभावपूरितविग्रहः ॥ १६ ॥

श्रीभागवतपीयूषसमुद्रमथनक्षम इति, श्रीभागवतमेव पीयूष-[1]समुद्रस्तस्योन्मथने विचारणे क्षमः समर्थ इत्यर्थः ॥ ४१ ॥

तत्सारभूतरासस्त्रीभावपूरितविग्रह इति, तस्य श्रीभागवता-मृतसिन्धोर्मथनानन्तरं सारांशभूतो यो रासस्तन्मण्डलस्थितानां स्त्री-णां भावोनुभवैकवेद्यस्तेन पूरितो विग्रहो यस्य ॥ ४२ ॥ १६ ॥

सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिदः ॥
रासलीलैकतात्पर्यः कृपयैतत्कथाप्रदः ॥ १७ ॥

सान्निध्यमात्रदत्तश्रीकृष्णप्रेमेति, दैवजीवेषु स्वसान्निध्यमात्रेण दत्तं श्रीकृष्णसम्बन्धि प्रेम स्नेहो येन स तथा, प्रेम्ण[2] एवाविमु-क्तिस्थायिभावमिति वा, वस्तुशक्तिरेव प्रयोजिका तत्र ॥ ४३ ॥

विमुक्तिद इति, सान्निध्यमात्रेणैवान्यविषयेभ्यो विशेषतो मुक्तिर्मनिच्छां ददातीति तथा, देशकालादिति वा, सालोक्यादितोपि विशिष्टामिति वा, अधिकारिभेदेन विविधामिति वा ॥ ४४ ॥

रासलीलैकतात्पर्य इति, रासलीलायामेवैकस्यां तात्पर्य-

१ उपसर्गाभावः क्वचित् ।
२ इदं वाक्यं नास्ति क्वचन ।

यस्येति वा ॥ ३२ ॥

पतिरिति, पाति सर्वान् स्वीयानिति पतिः, पूर्वोक्तदासी-नामिति वा ॥ ३३ ॥

रोपदक्पातसम्लुष्टभक्तद्विडिति, स्वभक्तान् ये द्विषन्ति ते भक्तद्विषः, रोपपूर्वकदृष्टिपातमात्रेणैव सम्यक् प्लुष्टा दग्धा भक्तद्विषो येन यस्येति वा ॥ ३४ ॥

भक्तसेवित इति, भक्तैःसेवित इति ॥ ३५ ॥ १४ ॥

सुखसेव्यो दुराराध्यो दुर्लभाङ्घ्रिसरोरुहः ॥
उग्रप्रतापो वाक्सीधुपूरिताशेषसेवकः ॥ १५ ॥

सुखसेव्य इति, सर्वात्मभावविद्भिर्भक्तैः सुखेनैव सेवितुं योग्यः ॥ ३६ ॥

तदन्यैः भावादिकैर्दुराराध्यः दुःखेन सेव्य इत्यर्थः ॥ ३७ ॥

दुर्लभाङ्घ्रिसरोरुह इति, दुर्लभे दुःप्रापे अङ्घ्रिसरोरुहे चरणकमले यस्येति ॥ ३८ ॥

उग्रप्रताप इति, उग्रः सर्वप्रतिपक्षोपमर्दकः प्रतापोऽनुभावो यस्येति ॥ ३९ ॥

वाक्सीधुपूरिताशेषसेवक इति, श्रीकृष्णकथारूपा वागेव सीधुरसस्तेन पूरिताः सम्पूर्णमनोरथा तदतिरिक्ताभिलापपराङ्मुखा सेवका यस्य यस्मादिति वा ॥ ४० ॥ १५ ॥

श्रीभागवतपीयूपसमुद्रमथनक्षमः ॥
तत्सारभूतरासस्त्रीभावपूरितविग्रहः ॥ १६ ॥

श्रीभागवतपीयूपसमुद्रमथनक्षम इति, श्रीभागवतमेव पीयूष-[1]समुद्रस्तस्योन्मथने विचारणे क्षमः समर्थ इत्यर्थ ॥ ४१ ॥

तत्सारभूतरासस्त्रीभावपूरितविग्रह इति, तस्य श्रीभागवतामृतसिन्धोर्मथनानन्तर सारांशभूतो यो रासस्तन्मण्डलस्थिताना स्त्रीणा भावोनुभवैकवेद्यस्तेन पूरितो विग्रहो यस्य ॥ ४२ ॥ १६ ॥

सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिदः ॥
रासलीलैकतात्पर्यः कृपयैतत्कथाप्रदः ॥ १७ ॥

सान्निध्यमात्रदत्तश्रीकृष्णप्रेमेति, दैवजीवेपु स्वसान्निध्यमात्रेण दत्तं श्रीकृष्णसम्बन्धि प्रेम स्नेहो येन स तथा, प्रेम्ण[2] एवाविमुक्तिस्थायिभावमिति वा, वस्तुशक्तिरेव प्रयोजिका तत्र ॥ ४३ ॥

विमुक्तिद इति, सान्निध्यमात्रेणैवान्यविषयेभ्यो विशेषतो मुक्तिर्मनिच्छा ददातीति तथा, वे कालादिति वा, सालोक्यादितोपि विशिष्टामिति वा, अधिकारिभेदेन विविधामिति वा ॥ ४४ ॥

रासलीलैकतात्पर्य इति, रासलीलायामेवैकस्या तात्पर्य-

१ उपसर्गाभाव क्वचित् ।
२ इद वाक्य नास्ति क्वचन ।

मुक्तेच्छा यस्य, रासलीलायामेकमसाधारणं तात्पर्यं यस्येति वा, सतीष्वप्यन्यासु लीलासु भरोत्रैवेतिभावः ॥ ४५ ॥

कृपयैतत्कथाप्रद इति, कृपया भक्तयात्मस्यावलम्बनमात्रेणैवा-तिदुर्लभाया अप्येतत्कथाया राससम्बन्धिन्याः प्रकृष्टो दातेत्यर्थः ॥ ४६ ॥ १७ ॥

विरहानुभवैकार्थसर्वत्यागोपदेशकः ॥
भक्त्याचारोपदेष्टा च कर्ममार्गप्रवर्तकः ॥ १८ ॥

विरहानुभवैकार्थसर्वत्यागोपदेशक इति, गोपीनां विरहकाले यो रस सोत्र विरहपदेनोच्यते, तेन तद्रसानुभवरूपे एवैकस्मिन्नर्थे सर्वस्य गृहादेस्त्यागस्य न्यासस्योपदेष्टेत्यर्थः, तद्रसानुभवायैवैकस्मै अर्थाय प्रयोजनायेति वा ॥ ४७ ॥

भक्त्याचारोपदेष्टा चेति, भक्तेःसेवाया आचार आचरणं त-स्यावश्यकर्तव्यत्वेनोपदेशकर्तेति ज्ञेयम् ॥ ४८ ॥

कर्ममार्गप्रवर्तक इति, श्रौतस्मार्तादिकर्मणां यो मार्गः । पद्ध-तिस्तस्य प्रवर्तको लोकसङ्ग्रहार्थमित्यर्थः ॥ ४९ ॥ १८ ॥

यागादौ भक्तिमार्गैकसाधनत्वोपदेशकः ॥
पूर्णानन्दः पूर्णकामो वाक्पतिर्विबुधेश्वरः॥ १९ ॥

यागादौ भक्तिमार्गैकसाधनत्वोपदेशक इति, यागोऽग्निहोत्रादिः

आदिशब्देन तपोदानादयोपि, तेषु सर्वेष्वपि भक्तिमार्गे एवैकस्मिन् साधनत्वं प्राप्तिसाधनत्वमुपदिशति, नत्वाहत्य ज्ञाने एव, इदं तु साधनदशापन्नभक्तावेव न तु फलदशापन्नायामपीति ज्ञेयम्॥ ५० ॥

पूर्णानन्द इति,-पूर्णोखण्डित आनन्दो यस्य, भक्तिरसैकपूर्णेष्वानन्दो यस्मादिति वा, पूर्णश्चासावानन्दश्चेति वा ॥ ५१ ॥

पूर्णकाम इति, पूर्णः सम्पन्नः कामो मनोरथो यस्य, पूर्णैः सर्वतोनिःस्पृहैः काम्यत इति वा ॥ ५२ ॥

वाक्पतिरिति, वाचां वेदादिसकलविद्यानां पतिः स्वामी नियामक इत्यर्थः, अग्निरूपत्वाद्वागधिष्ठातृदेवो वा ॥ ५३ ॥

अत एव विबुधेश्वर इति, विशेषतो बुध्यन्ते जानन्तीति विबुधाः पण्डितास्तेषामीश्वरो ज्ञानार्थमुपास्य इत्यर्थ, विबुधानां देवानामपीति वा ॥ ५४ ॥ १९ ॥

कृष्णनामसहस्रस्य वक्ता भक्तपरायणः ॥
भक्त्याचारोपदेशार्थनानावाक्यनिरूपकः ॥ २० ॥

कृष्णनामसहस्रस्य वक्तेति, स्पष्टम् ॥ ५५ ॥

भक्तपरायण इति, भक्तेषु परायणो व्यासक्त इत्यर्थ, भक्ता एव परमयनं यस्येति वा, तेषु परमयनं ज्ञानं यस्मादिति वा, तेषां परमयनं स्थानं यस्मादिति वा ॥ ५६ ॥

भक्त्याचारोपदेशार्थनानावाक्यनिरूपक इति. भक्त्याचारस्य

सेवाक्लेशरुपदेशानिमित्तं नाना बहुविधानि यानि श्रुत्यादिवाक्यानि तेषां निरूकौ भक्तिरेव कर्तव्येत्येवंविधतात्पर्यस्य प्रदर्शक इत्यर्थः ॥ ५७ ॥ २० ॥

स्वार्थोज्झिताखिलप्राणप्रियस्तादृशचेष्टितः ॥
स्वदासार्थकृताशेषसाधनः सर्वशक्तिधृक् ॥ २१ ॥

स्वस्यार्थे स्वप्राप्त्यर्थमुज्झितमखिलं सर्वं गृहादिकं यैस्ते तादृशास्तेषां प्राणनाथ इत्यर्थः, स्वस्मिन्नुज्झिता निवेदिता अखिल देहादयः प्राणाश्च यैस्ते स्वार्थोज्झिताखिलप्राणास्तेषां प्रिय इति वा ॥ ५८ ॥

तादृशचेष्टित इति, तादृशं तत्प्रपत्त्यनुरूपं चेष्टितं विलासो यस्य, तादृशेष्विति वा ॥ ५९ ॥

स्वदासार्थकृताशेषसाधन इति, स्वदासाना योर्थो द्रव्यात्मवत्ता दिस्तेनैव कृतानि सम्पादितान्यशेषभोगसाधनानि यस्य, स्वदासार्थ कृतानि प्रकटितान्यशेषाणि सर्वाणि भगवत्प्राप्तिसाधनानि येनेति वा ॥ ६० ॥

सर्वशक्तिधृगिति, सर्वेषां जीवानां शक्तिं धृष्णाति प्रतिबध्नाति, सर्वेषु भक्तेषु स्वशक्तिं धारयतीति वा, सर्वशक्तिं स्वयमेक एव

१ तादृशचेष्टित इत्यपरेषाम्पाठः ।

धारयतीति वा ॥ ६१ ॥ २१ ॥

भुवि भक्तिप्रचारैककृते स्वान्वयकृत्पिता ॥
स्ववंशे स्थापिताशेषस्वमाहात्म्यः स्मयापहः ॥२२॥

भुवीति, भुवि भूलोके भक्तेः सर्वत्र प्रचारस्यैवैकस्य कृते निमित्तं स्वान्वयं स्ववंशं अपत्यपरम्परां कृतवानित्यर्थः, वंशस्थापनं तु भाविजीवोद्धारार्थमेवेतिभावः ॥ ६२ ॥

पितेति, सर्वस्मादनिष्टात्पातीति पिता जनक इत्यर्थः, अत्र वक्तुरेव तत्पुत्रत्वादस्मत्पितेति ज्ञेयम् ॥ ६३ ॥

स्ववंशे स्थापिताशेषस्वमाहात्म्य इति, स्वस्य वंशे पुत्रपौत्रादिषु स्थापितमशेषं सर्वं स्वमाहात्म्यं स्वप्रतापो येन, इदं तु दृष्टश्रुताभ्यां ज्ञेयम् ॥ ६४ ॥

स्मयापह इति, गर्वेण स्वसादृश्यं ये कर्तुमिच्छन्ति तेषां स्मयस्य गर्वस्य अपहन्ता नाशक इत्यर्थः, स्मयेन ईषद्धासेन भक्तदुःखमपनयतीति वा ॥ ६५ ॥ २२ ॥

पतिव्रतापतिः पारलौकिकैहिकदानकृत् ॥
निगूढहृदयोनन्यभक्तेषु ज्ञापिताशयः ॥ २३ ॥

पतिव्रतायाः श्रीमहालक्ष्म्याः पतिर्भर्तेत्यर्थः, पतिव्रतालक्षणन्तु धर्मशास्त्रेभिहितं "आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा मृते

म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रते''ति ज्ञेयम् ॥ ६६ ॥

पारलौकिकैहिकदानकृदिति, परलोकसम्बन्धि सुखं पारलौकिकं, इहलोकसम्बन्धि सुखमैहिकं, तदुभयोर्दानं भक्तेषु करोतीत्यर्थ ॥ ६७ ॥

निगूढहृदय इति, नितरां गूढं गुप्तं हृदयमभिप्रायो यस्य ॥६८॥

अनन्यभक्तेषु ज्ञापिताशय इति, अनन्येष्वेकान्तिभक्तेषु ज्ञापितो बोधित आशयोऽभिप्रायो येन, अन्यथा अकृतज्ञत्वप्रसङ्ग ॥ ६९ ॥ २३ ॥

उपासनादिमार्गातिमुग्धमोहनिवारकः ॥
भक्तिमार्गे सर्वमार्गवैलक्षण्यानुभूतिकृत् ॥ २४ ॥

''वाचं धेनुमुपासीत,'' ''अन्नं ब्रह्मेत्युपासीते''त्यादिप्रसिद्धा या देवतोपासना तदादिपदेन कर्मोच्यते तत्प्रतिपादका ये मार्गा ऋषिप्रणीता सिद्धान्ता तै कृत्वा अत्यन्त मुग्धा मोह प्राप्ता ये जीवास्तेषां मोहस्य भक्तिमार्गप्राकट्येन नितरां वारकस्तुच्छकारक इत्यर्थ ॥ ७० ॥

भक्तिमार्गे सर्वमार्गवैलक्षण्यानुभूतिकृदिति, सर्वेभ्यो मार्गेभ्य कर्मज्ञानादिभ्योऽपि भक्तिमार्गे सर्वस्माद्वैलक्षण्यमेतादृशोऽन्यो मार्गो नास्तीत्येवंविधं तस्यानुभवं करोतीति तथा ॥ ७१ ॥ २४ ॥

पृथक्शरणमार्गोपदेष्टा श्रीकृष्णहार्दवित् ॥
प्रतिक्षणनिकुञ्जस्थलीलारससुपूरितः ॥ २५ ॥

गीतायां "सर्वगुह्यतमं भूय" इत्युपक्रम्य कर्मज्ञानोपासनाभक्ति-भ्योऽप्युत्कृष्टत्वेन पृथक् स्वातन्त्र्येणोक्तः 'सर्वधर्मान् परित्यज्ये'त्यादिना यो मार्गस्तस्योपदेष्टा स्वीयेष्वित्यर्थः, पृथगितिविशेषणं च क्रियायाः ॥ ७२ ॥

अत एव श्रीकृष्णहार्दविदिति, श्रीकृष्णस्य हार्दं हृदिस्थं अभिप्रायं वेत्ति जानातीति तथा ॥ ७३ ॥

प्रतिक्षणनिकुञ्जस्थलीलारससुपूरित इति, प्रतिक्षणं क्षणे क्षणे निकुञ्जे स्थितस्य भगवतो या लीला तत्सम्बन्धी यः कश्चनीयो रसो भावविशेषस्तेन अत्यन्तं पूरितो व्याप्त इत्यर्थः ॥ ७४ ॥ २५ ॥

तद्विस्मृतान्य इति वा, तयैव कथयैव विस्मृता अन्ये अनसम्बन्धिनो येन ॥ ७६ ॥

व्रजप्रिय इति, व्रजो व्रजवासिजनः स्थलं वा, व्रज प्रियो यस्य, तस्य प्रिय इति वा ॥ ७७ ॥

अत एव प्रियव्रजस्थितिरिति, प्रिया अभीष्टा व्रजे स्थितिर्वासो यस्य ॥ ७८ ॥

पुष्टिलीलाकर्तेति, पुष्टिरनुग्रहः तन्मूलिका लीला पुष्टिलीला तस्याः कर्तेत्यर्थः, लोकवेदातीताया इति वा ॥ ७९ ॥

रहःप्रिय इति, रहसि एकान्ते प्रियं लीलाकरणं यस्य, एकान्तस्थितिः प्रिया यस्येति वा ॥ ८० ॥ २६ ॥

- भक्तेच्छापूरकः सर्वाज्ञातलीलोऽतिमोहनः ॥

सर्वासक्तो भक्तमात्रासक्तः पतितपावनः ॥ २७ ॥

भक्तेच्छापूरक इति, भक्तानामिच्छायाः पूर्तिकर्तेत्यर्थः ॥८१॥

सर्वाज्ञातलील इति, सर्वैर्भक्तेतरैः सर्वोत्कृष्टत्वेन न ज्ञाता लीला यस्य, सर्वैर्भक्तैरासमन्तात् ज्ञातलीलो वा ॥ ८२ ॥

अतिमोहन इति, निजरूपदर्शनेन भक्तानत्यन्तं मोहयतीति, निजरूपाप्रदर्शनेन अभक्तानत्यन्तं मोहयतीति वा ॥ ८३ ॥

सर्वासक्त इति, सर्वेषु भक्तेष्वासक्तः सर्वेष्वभक्तेष्वनासक्त इति वा ॥ ८४ ॥

अत एव भक्तमात्रासक्त इति, स्पष्टम्॥ ८५ ॥

पतितपावन इति, पतितान् ब्रह्महत्यादिमहापातकदूषितान् स्वीकारमात्रेण पावयति पवित्रयतीत्यर्थः ॥ ८६ ॥ २७ ॥

**स्वयशोगानसंहृष्टहृदयाम्भोजविष्टरः ॥**

**यशःपीयूषलहरीप्लावितान्यरसः परः ॥ २८ ॥**

स्वस्य यशोगानेन सम्यक् हृष्टानि प्रफुल्लितानि भक्तानां हृदयकमलानि तान्येव विष्टर आसनं यस्य, तेषु आसनमिति वा ॥ ८७ ॥

यशःपीयूषलहरीप्लावितान्यरस इति, गेययशोरूपं यत्पीयूषममृतं तल्लहरीभिस्तरङ्गैः प्लावितास्तन्मध्ये पातिता अन्ये रसाः शृङ्गारादयो येन, यशःपीयूषलहरीभिः प्लाविताः प्रवाहितास्तुच्छीकृता अन्ये रसा येनेति वा ॥ ८८ ॥

पर इति, पिपर्ति स्वीयान् पूरयति वा भक्तेच्छामिति परः ॥ ८९ ॥ २८ ॥

**लीलामृतरसार्द्रार्द्रीकृताखिलशरीरभृत् ॥**

**गोवर्धनस्थित्युत्साहस्तल्लीलाप्रेमपूरितः ॥ २९ ॥**

लीलामृतरसार्द्रार्द्रीकृताखिलशरीरभृदिति, लीलामृतरसार्द्रार्द्रीकृताखिलाः सर्वे शरीरभृतो भक्ता येन सः ॥ ९० ॥

सहजस्मित इति, सहजं नैसर्गिकं स्मितं मुखे ईषद्धासो यस्य, न तु वैयर्थिकमित्यर्थः ॥ १०४ ॥

त्रिलोकीभूषणमिति, त्रिलोक्या भूषणं अलङ्कारत्वान्मण्डनमित्यर्थः ॥ १०५ ॥

भूमिभाग्यमिति- भूमेः साक्षात्सम्बन्धान्मूर्तिमद्भाग्यमिव भाग्यम् ॥ १०६ ॥

सहजसुन्दर इति, सहजात्स्वभावादेव सुन्दरः, सहजं सुन्दरं यस्येति वा ॥ १०७ ॥ ३२ ॥

अशेषभक्तसम्प्रार्थ्यचरणाब्जरजोधन इति, अशेषैः सर्वै रप्यनन्यभक्तैः सम्यगाग्रहेण प्रार्थ्यं याचनार्हं चरणाब्जरजोरूपं चरणकमलपरागरूपं धनं अभ्यानिधिर्यस्मादिति ॥ १०८ ॥

इत्यानन्दनिधेः प्रोक्तन्नाम्नामष्टोत्तरं शतम् ॥३३॥

श्रद्धाविशुद्धबुद्धिर्यः पठत्यनुदिनञ्जनः ॥
स तदेकमनाः सिद्धिमुक्ताम्प्राप्नोत्यसंशयः ॥ ३४ ॥

तदप्राप्तौ वृथा मोक्षस्तदाप्तौ तद्गतार्थता ॥
अतः सर्वोत्तमं स्तोत्रञ्जप्यं कृष्णम्सार्थिभिः ॥ ३५ ॥

इत्यानन्दनिधेरिति, आनन्दघनस्य, अन्यत् स्पष्टम् ॥ ३३ ॥

तदेकमनाः तस्मिन् श्रीवल्लभे एवैकस्मिन्मनो यस्य, उक्तां कृष्णाधरामृतास्वादरूपाम् ॥ ३४ ॥

तदप्राप्तौ आस्वादालाभे ॥ ३५ ॥

यदीयत्वं समाश्रित्य कृतं निर्वचनं मया ॥
नाम्ना स एव क्षमतां यदत्रानुचितं वचः ॥ १ ॥

॥ इति श्रीमद्वल्लभनन्दनचरणकमलैकशरणश्रीरघुनाथस्य कृतौ श्रीसर्वोत्तमस्तोत्रविवरणं सम्पूर्णम् ॥

